Parimal Sanskrit Series No -4

# NĀTYASĀSTRA

OF

# BHARATAMUNI

WITH THE COMMENTARY ABHINAVABHĀRATI

*By*

ABHINAVAGUPTACHARYA

VOL. II

CHAPTERS 8-18

*General Editor*

**Dr. R. S. NAGAR**

*Edited by*

K. L. JOSHI

M.A. Vedalankar

**Parimal Publications**

DELHI — AHMEDABAD

भरतमुनिप्रणीत

# नाट्यशास्त्रम्

श्रीमदभिनवगुप्ताचार्यविरचितया अभिनवभारती—
संस्कृतव्याख्यया समुद्भासितम्

द्वितीयो भागः

अध्यायाः ८—१८

प्रधानसम्पादक
डा० रविशंकर नागर
संस्कृत विभाग, दिल्ली विश्वविद्यालय

सम्पादक
कन्हैयालाल जोशी
एम० ए० वेदालंकार

परिमल पब्लिकेशन्स
दिल्ली—अहमदाबाद

# विषय सूची

## अष्टमेऽध्याये अङ्गाभिनय

## नवमेऽध्याये उपाङ्गाभिनय

## दशमेऽध्याये-चारीविधानम्

मौम्यः



आकाशिक्यः

एकादशेऽध्याये मण्डलविकल्पनम्

## द्वादशेऽध्याये गतिप्रचार

आसनविधिः

## त्रयोदशोऽध्याये कक्ष्याविभागविधानम्



चतुर्दशोऽध्याये वागभिनये छन्दोविधानम्

## पञ्चदशोऽध्याये वागभिनये-वृत्तलक्षणम्

षोडशोऽध्याये लक्षणालंकारा

सप्तदशोऽध्याये भाषालक्षणं तन्नियमलक्षण काकुस्वरू

## अष्टादशोऽध्यायेदशरूपलक्षणम्

॥ श्री ॥

# नाट्यशास्त्रम्

## अष्टमोऽध्याय

ऋषय ऊचु ।

भावाना च रसानां च समुत्थान यथाक्रमम् ।
त्वत्प्रसादात्तु त सर्वमिच्छामो वेदितु पुन ॥ १ ॥
नाट्ये कतिविध कार्य तज्ज्ञैरभिनयक्रम ।
कथ वाभिनयो'[1] ह्येष कतिभेदस्तु कीर्तित ॥ २ ॥
सर्वमेतद्यथातत्त्व कथयस्व महामुने'[2] ।
यो यथाभिनयो यस्मिन् योक्तव्य सिद्धिमिच्छता ॥ ३ ॥
तेषां तु वचन श्रुत्वा मुनीनां भरतो मुनि ।
प्रत्युवाच पुनर्वाक्य चतुरोऽभिनयान् प्रति ॥ ४ ॥
अह व कथयिष्यामि निखिलेन तपोधना ।
यस्मादभिनयो ह्येष विधिवत् समुदाहृत ॥ ५ ॥

यदुक्त चत्वारोऽभिनया इति तान् वर्णयिष्याम । अत्राह—अभिनय इति कस्मात्, अत्रोच्यते—अभीत्युपसर्ग णीञ् इति प्रापणार्थको धातु । अस्याभिनीत्येव व्यवस्थितस्य एरजित्यच्प्रत्ययान्तस्याभिनय इत्येव रूप सिद्धम् । एतच्च धात्वर्थानुवचनेनावधार्य'[3] भवति ।

अत्र श्लोकौ

अभिपूर्वस्तु णीञ् धातुराभिमुख्यार्थनिर्णये ।
यस्मात्पदार्थान्नयति तस्मादभिनय स्मृत ॥ ६ ॥
विभावयति यस्माच्च नानार्थान् हि प्रयोगत ।
शाखाङ्गोपाङ्गसयुक्तस्तस्मादभिनय स्मृत ॥ ७ ॥
चतुर्विधश्चैव भवेन्नाट्यस्याभिनयो द्विजा ।
अनेकभेदबाहुल्य नाट्य ह्यस्मिन् प्रतिष्ठितम् ॥ ८ ॥
आङ्गिको वाचिकश्चैव ह्याहार्य'[4] सात्त्विकस्तथा ।
ज्ञेयस्त्वभिनयो विप्रा चतुर्धा परिकल्पित ॥ ९ ॥

---

१ NS चाभिनेयो । GOS KS. वाभि० ।
२ KSS भगवन् वक्तुमर्हसि । NS , GOS , same as above
३. GOS धात्वर्थवचनेनावधार्यम् ।
४ KSS आहार्य ।

सात्त्विकः पूर्वमुक्तस्तु भावैश्च[1] सहितो मया।
अङ्गाभिनयमेवादौ गदतो मे निबोधत ॥ १० ॥
त्रिविधस्त्वाङ्गिको ज्ञेयः[2] शारीरो मुखजस्तथा।
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ॥ ११ ॥
शिरोहस्तकटीवक्षःपार्श्वपादसमन्वितः।
अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसंग्रहः ॥ १२ ॥
तस्य शिरोहस्तोरःपार्श्वकटीपादतः षडङ्गानि।
नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि ॥ १३ ॥
अस्य[3] शाखा च नृत्तं च तथैवाङ्कुर एव च।
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः ॥ १४ ॥
आङ्गिकस्तु भवेच्छाखा ह्यङ्कुरः[4] सूचना भवेत्।
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ॥ १५ ॥
मुखजेऽभिनये विप्रा नानाभावरसाश्रये[5]।
शिरसः प्रथमं कर्म गदतो मे निबोधत ॥ १६ ॥
आकम्पितं कम्पितं च धुतं विधुतमेव च।
परिवाहितमाधूतमवधूतं तथाञ्चितम् ॥ १७ ॥
निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम्।
लोलितं चैव[7] विज्ञेयं त्रयोदशविधं शिरः ॥ १८ ॥
शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत्।
द्रुतं तदेव बहुशः कम्पितं कम्पितं शिरः ॥ १९ ॥
ऋजुस्थितस्य चोर्ध्वाध क्षेपादाकम्पितं भवेत्।
यद्गतश्चलितं पश्च तत्कम्पितमिहोच्यते ॥ २० ॥
संज्ञोपदेशपृच्छासु स्वभावाभाषणे तथा।
[8]निर्देशावाहने चैव भवेदाकम्पितं शिरः ॥ २१ ॥

१. KSS तु।
२. KSS. दृष्टः।
३. KSS तस्य।
४. KSS. ह्यङ्कुरः।
५. KSS. समाश्रये GOS. NS. रसाश्रये।
६. KSS. हिंदोलितं। GOS, NS. Same as above
७ KSS चैव NS, GOS चेति।
८. KSS निर्देशे NS, GOS. निर्देशा।

रोषे वितर्के विज्ञाने प्रतिज्ञानेऽथ[1] तर्जने ।
[2]प्रश्नातिशयवाक्येषु शिरः कम्पितमिष्यते ॥ २२ ॥
शिरसो रेचनं यत्तु शनैस्तद् धुतमिष्यते[3] ।
द्रुतमारेचनादेतद्विधुतं तु भवेच्छिरः ॥ २३ ॥
अनीप्सिते विषादे च विस्मये प्रत्यये तथा ।
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः ॥ २४ ॥
शीतग्रस्ते भयार्ते च[4] त्रासिते ज्वरिते तथा ।
पीतमात्रे तथा मद्ये विधुतं तु भवेच्छिरः ॥ २५ ॥
[5]पर्यायशः पार्श्वगतं शिरः स्यात् परिवाहितम् ।
[6]आधूतमुच्यते तिर्यक् सकृदुद्वाहितं तु यत् ॥ २६ ॥
साधने विस्मये हर्षे स्मिते[7] चामर्षिते[8] तथा ।
विचारे विहृते[9] चैव लीलायां परिवाहितम् ॥ २७ ॥
[10]गर्वेच्छादर्शने चैव[11] पार्श्वस्योर्ध्वनिरीक्षणे ।
[12]आधूतं तु शिरो ज्ञेयमात्मसम्भावनादिषु ॥ २८ ॥
यदध सकृदाक्षिप्तमवधूतं तु तच्छिरः ।
सन्देशावाहनालापसंज्ञादिषु नदिष्यते ॥ २९ ॥
किञ्चित् [13]पार्श्वनतग्रीवं शिरो विज्ञेयमञ्चितम् ।
व्याधिते मूर्च्छिते मत्ते चिन्तायां [14]हनुधारणे ॥३० ॥

---

१ KSS प्रतिज्ञातेऽथ NS प्रतिज्ञाने च GOS. Same as above
२ NS पृच्छानि KSS श्लाघ्यमर्षणयोश्चैव ।
३. NS उच्यते ।
४ KSS तु GOS, NS च ।
५. KSS पर्यायेन ।
६ KSS सकृदुद्वाहितमिति स्मृतम् । NS GOS Same as above
७ KSS स्थिते । NS., GOS स्मृते ।
८ NS. वामर्षिते KSS GOS चामर्षिते ।
९ NS निहृते KSS, GOS विहृते ।
१० NS गर्वातिमर्दने । KSS, GOS गर्वेच्छा ।
११ तथा चोर्ध्वं NS, GOS Same as above
१२ KSS उद्वाहितं तु कर्तव्यं ।
१३ KSS, NS पार्श्वा ।
१४. KSS मचिन्ते तु स्थिते भवेत । NS, GOS. Same as above.

[1]उत्क्षिप्तांसावसक्तं यत्कुञ्चितभ्रूलतं शिरः ।
निहञ्चितं[2] तु विज्ञेयं स्त्रीणामेतत् प्रयोजयेत् ॥ ३१ ॥
गर्वे[3] माने विलासे च बिब्बोके किलकिञ्चिते ।
मोट्टायिते कुट्टमिते[4] स्तम्भमाने निहञ्चितम् ॥ ३२ ॥
परावृत्तानुकरणात्[5] परावृत्तमिहोच्यते ।
तत् स्यान्मुखापहरणे पृष्ठतः प्रेक्षणादिषु ॥ ३३ ॥
उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः ।
प्रांशुदिव्यास्त्र[6]योगेषु स्यादुत्क्षिप्तं प्रयोगतः ॥ ३४ ॥
[7]अधोमुखं स्थितं चापि बुधाः प्राहुरधोगतम् ।
लज्जायां च प्रणामे च दुःखे चाधोगतं [8]शिरः ॥ ३५ ॥
सर्वतो[9] भ्रमणाच्चैव शिरः स्यात् परिलोलितम् ।
मूर्छाव्याधिमदावेश[10]ग्रहनिद्रादिषु स्मृतम् ॥ ॥ ३६ ॥
ऋजुस्वभावमस्थानं प्राकृतं तु स्वभावजम् ।
मङ्गल्याध्ययनध्यानस्वभावजपकर्मसु ॥ ३७ ॥
एभ्योऽन्ये बहवो भेदा लोकाभिनयसंश्रिताः[11] ।
ते च लोकस्वभावेन प्रयोक्तव्याः प्रयोक्तृभिः ॥ ३८ ॥
त्रयोदशविधं ह्येतच्छिरःकर्म मयोदितम् ।
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ॥ ३९ ॥
कान्ता भयानका हास्या करुणा चाद्भुता तथा ।
रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः ॥ ४० ॥

---

१ KSS उत्क्षिप्तबाहुशिरमन्यकाऽञ्चितनामिगोचर NS बाहुशिखर ।
२ NS शिरो ज्ञेय । KSS, GOS तु विज्ञेय ।
३ NS गर्वे विलासे ललिते KSS, GOS, MG Same as above.
४. NS, GOS स्तम्भे माने ।
५. KSS, NS. परावृत्तं शिरः स्मृतम् GOS Same as above
६ KSS दिव्यास्त्र NS, GOS. दिव्यार्थं ।
७ NS अधोमुखस्थितं चापि शिरः प्राहुरधोमुखम् KSS अधोमुखं स्थितं त्वधोगतम्
GOS Same as above,
८. KSS, NS भवेत् GOS शिरः ।
९ KSS, NS सर्वतो लोलनाच्चापि शिरः स्यात्परिलोलितम् GOS Same as above
१० KSS. मदावेशग्रह GOS NS. मदावेशग्रह ।
११. संश्रिताः GOS, NSS समया ।

स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता ।
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः ॥ ४१ ॥
शून्या च मलिना चैव श्रान्ता लज्जान्विता तथा ।
ग्लाना च शङ्किता चैव विषण्णा मुकुला तथा ॥ ४२ ॥

कुञ्चिता चाभितप्ता च जिह्मा सललिता तथा ।
वितर्कितार्धमुकुला विभ्रान्ता विप्लुता तथा ॥ ४३ ॥

आकेकरा विकोशा च [1]त्रस्ता च मदिरा तथा ।
षट्त्रिंशद् दृष्टयो ह्येता तासु नाट्यं प्रतिष्ठितम् ॥ ४४ ॥

अस्य दृष्टिविधानस्य नानाभावरसाश्रयम्[3] ।
लक्षणं संप्रवक्ष्यामि यथाक्रमं प्रयोगतः ॥ ४५ ॥

हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा ।
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥ ४६ ॥

प्रोद्वृत्तनिष्टब्धपुटा स्फुरदुद्वृत्ततारका ।
दृष्टिर्भयानकात्यर्थं भीता ज्ञेया भयानके ॥ ४७ ॥

क्रमादाकुञ्चितपुटा [6]विभ्रान्ताकुलतारका ।
हास्या दृष्टिस्तु कर्तव्या कुहकाभिनयं प्रति ॥ ४८ ॥

पतितोर्ध्वपुटा साश्रा मन्युमन्थरतारका ।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥ ४९ ॥

या [7]त्वाकुञ्चितपक्ष्माग्रा साश्चर्योद्वृत्ततारका ।
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते ॥ ५० ॥

क्रूरा [8]रूक्षारुणोद्वृत्तनिष्टब्धपुटतारका ।
भ्रुकुटीकुटिला दृष्टि रौद्रे रौद्री रसा स्मृता ॥ ५१ ॥

---

१ KSS त्रस्ताऽत्र ।
२ KSS, NS नामतोऽभिहिता मया ।
३ NS रसाश्रितम् KSS GOS रसाश्रयम् ।
४ KSS, NS समन्मथा GOS [illegible] ।
५ KSS प्रस्फुरद्वृत्त ।
६ KSS सविभ्रान्ता ।
७ NS चाकुञ्चित ।
८ NS रूक्षोद्वृत्त KSS रूक्षावृता GOS रूक्षाद्वृता ।

दीप्ता विकसिता क्षुब्धा गम्भीरा समतारका ।
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ॥ ५२ ॥
निकुञ्चितपुटापाङ्गा [1]घूर्णोपप्लुततारका ।
संश्लिष्टस्थिरपक्ष्मा[2] च बीभत्सा दृष्टिरिष्यते ॥ ५३ ॥
[3]नासाग्रसक्ता निमिषा तथाधोभागचारिणी ।
आकेकरपुटा शान्ते शान्ता दृष्टिर्भवेदसौ ॥ ५४ ॥
रसजा दृष्टो ह्येता विज्ञेया लक्षणान्विता ।
अत परं प्रवक्ष्यामि स्थायिभावसमाश्रया ॥ ५५ ॥
व्याकोशमध्या मधुरा [4]स्थिततारामिलाषिणी ।
सानन्दाश्रुप्लुता दृष्टि स्निग्धेय रतिभावजा ॥ ५६ ॥
चला हसितगर्भा च [5]विशत्तारानिमेषिणी ।
किञ्चिदाकुञ्चिता दृष्टि हृष्टा हासे प्रकीर्तिता ॥ ५७ ॥
अधस्रस्तोत्तरपुटा[6] किञ्चित्सरुद्धतारका ।
मन्दसञ्चारिणी दीना सा शोके दृष्टिरिष्यते ॥ ५८ ॥
रुक्षा स्थिरोद्वृत्तपुटा निष्टब्धोद्वृत्ततारका ।
कुटिला भ्रुकुटिर्दृष्टि क्रुद्धा क्रोधे विधीयते[7] ॥ ५९ ॥
संस्थिते तारके यस्याः स्थिता विकसिता तथा ।
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसम्भवा ॥ ६० ॥
विस्फारितोभयपुटा भयकम्पिततारका ।
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥ ६१ ॥
संकोचितपुटाभ्यामा[8] दृष्टिर्मीलिततारका ।
परमोद्वेगात् समुद्विग्ना जुगुप्सायां जुगुप्सिता ॥ ६२ ॥

---

१. NS, KSS. घूर्णोपप्लुत ।
२ KSS संश्लिष्टस्मितपक्ष्मा NS, GOS, Same as above
३ KSS does not read this verse
४ KS स्थगारा KSS. स्थरतारा GOS Same
५ KS विशन्तारामिलाषिणी KSS, GOS. Same as above.
६ KS दधस्रस्तोत्तरपुरा NS अधंस्रस्तोत्तर GOS अवस्रस्तोत्तर
७ GOS, KSS Same as above NS क्रोधेऽभिधीयते ।
८ NS, KSS संकोचितपुटाभ्यामा ।

भ्रूमध्यवृत्ततारा च नष्टोभयपुटान्विता ।
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ॥ ६३ ॥

स्थायिभावाश्रया ह्येता [१]विज्ञेया दृष्टयो बुधैः ।
सञ्चारिणीनां दृष्टीनां सम्प्रवक्ष्यामि लक्षणम् ॥ ६४ ॥

समतारा समपुटा निष्कम्पा शून्यदर्शना ।
बाह्यार्थाग्राहिणी [२]क्षामा शून्या दृष्टिः प्रकीर्तिता ॥ ६५ ॥

[३]प्रस्पन्दमानपक्ष्माग्रा नात्यर्थमुकुलैः पुटैः ।
मलिनान्ता च मलिना दृष्टिर्विस्मिततारका ॥ ६६ ॥

श्रमप्रम्लापितपुटा क्षामा कुञ्चितलोचना ।
सन्ना पतिततारा च श्रान्ता दृष्टिः प्रकीर्तिता ॥ ६७ ॥

किञ्चिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया ।
[४]अपाधोगततारा च दृष्टिर्लज्जान्विता तु सा ॥ ६८ ॥

[५]म्लानभ्रूपुटपक्ष्मा या शिथिला मन्दचारिणी ।
[६]क्रमप्रविष्टतारा च ग्लाना दृष्टिस्तु सा स्मृता ॥ ६९ ॥

किञ्चिच्चला स्थिरा [७]किञ्चिदुद्गता [८]तिर्यगायता ।
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते ॥ ७० ॥

विषादविस्तीर्णपुटा पर्यस्तान्ता निमेषिणी ।
किञ्चिन्निष्टब्धतारा च कार्या दृष्टिर्विषादिनी ॥ ७१ ॥

[९]स्फुरदाश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटान्विता ।
[१०]सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते[११] ॥ ७२ ॥

---

१ NS दृष्टयो लक्षिता मया KSS. लक्षिता दृष्टयामया ।
२. NS., KSS क्षामा ।
३ NS., KSS प्रस्पन्द ।
४. KSS. GOS. अपायामुपनाग्रा ।
५ KSS. ग्लान ।
६. KSS क्रम । NS., GOS सम ।
७ KSS किञ्चिदुत्तुङ्गा NS. किञ्चिदुन्नता ।
८. KSS किञ्चिदायता ।
९ KSS. स्फुरितादिनष्टपक्ष्माग्रा ।
१० KSS गुप्ता (च) मीलित ।
११. NS उच्यते ।

आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा ।
सनिकुञ्चिततारा च कुञ्चिता दृष्टिरिष्यते ॥ ७३ ॥

मन्दायमानतारा या पुटैः प्रचलितैस्तथा ।
सन्तापोपप्लुता दृष्टिरभितप्ता तु सव्यथा ॥ ७४ ॥

लम्बिताकुञ्चितपुटा शनैस्तिर्यङ् निरीक्षिणी ।
निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता ॥ ७५ ॥

मधुराकुञ्चितान्ता च 'सभ्रूक्षेपा च सस्मिता ।
समन्मथविकारा च दृष्टिः सा ललिता स्मृता ॥ ७६ ॥

वितर्कोद्वर्तितपुटा सर्वतोत्फुल्लतारका ।
'अधोगतविचारा च 'दृष्टिरेषा वितर्किता ॥ ७७ ॥

अर्धव्याकोशपक्ष्मा' च ह्लादार्धमुकुलैः पुटैः ।
स्मितार्धमुकुला दृष्टिः किञ्चिल्ललिततारका ॥ ७८ ॥

अनवस्थिततारा' च विभ्रान्ताकुलदर्शना ।
विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते ॥ ७९ ॥

पुटौ प्रस्फुरितौ यस्य' निष्कम्पौ पतितौ पुनः ।
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ॥ ८० ॥

आकुञ्चितपुटापाङ्गा सङ्गतार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥ ८१ ॥

विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी ।
अनवस्थितसञ्चारा' विकोशा दृष्टिरुच्यते ॥ ८२ ॥

त्रासोद्वृत्तपुटा या तु तथोत्कम्पिततारका ।
सन्त्रासोत्फुल्लमध्या च त्रस्ता दृष्टिरुदाहृता ॥ ८३ ॥

'आपूर्णमानमध्या या क्षामान्ताञ्चितलोचना ।
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥ ८४ ॥

---

१. KSS मन्त्रक्षेपाश्च ।
२ GOS. अधोमुखगता ।
३. KSS दृष्टिरिष्टा ।
४. KSS नारा ।
५. NS अनवस्थित ।
६ GOS, KSS यस्य, NS यस्याः ।
७ GOS अनवस्थितनारा च ।
८. NS, KSS व्यापूर्ण ।

किञ्चिदाकुञ्चितपुटा ह्यनवस्थिततारका ।
तथा चलितपक्ष्मा च दृष्टिर्मध्यमदे भवेत् ॥ ८५ ॥
सनिमेषानिमेषा च किञ्चिद् दर्शिततारका ।
अधोभागचरी दृष्टिरधमे तु मदे स्मृता ॥ ८६ ॥
इत्येव लक्षिता ह्येता षट्त्रिंशद् दृष्टयो मया ।
रसजा [1]सहजाश्चासां विनियोगं निबोधत ॥ ८७ ॥
रसजास्तु रसेष्वेव स्थायिषु स्थायिदृष्टय ।
[2]शृणुत व्यभिचारिण्य सञ्चारिषु यथास्थिता[3] ॥ ८८ ॥
शून्या दृष्टिस्तु चिन्तायां स्तम्भे चापि प्रकीर्तिता ।
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते ॥ ८९ ॥
श्रान्ता श्रमार्ते[4] स्वेदे च लज्जायां लज्जिता[5] तथा ।
अपस्मारे तथा व्याधौ ग्लान्यां ग्लाना[6] विधीयते ॥ ९० ॥
शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी ।
निद्रास्वप्नसुखार्थेषु मुकुला दृष्टिरिष्यते ॥ ९१ ॥
कुञ्चितासूयितानिष्टदुष्प्रेक्षाक्षिव्यथासु च ।
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः ॥ ९२ ॥
जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ।
धृतौ हर्षे सललिता स्मृतौ तर्के च तर्किता ॥ ९३ ॥
आह्लादिष्वर्धमुकुला गन्धस्पर्शसुखादिषु ।
विभ्रान्ता दृष्टिरावेगे सम्भ्रमे विभ्रमे तथा ॥ ९४ ॥
विप्लुता [7]चपलोन्मादवु खातिमरणादिषु ।
आकेकरा दुरालोके विच्छेदप्रेक्षितेषु च ॥ ९५ ॥
विबोधगर्वामर्षो[8]ग्रमतिषु स्याद्विकोशिता ।
त्रस्ता त्रासे भयेव दृष्टिर्मदिरा च मदेष्विति ॥ ९६ ॥

---

१ KSS नावजा ।
२ KSS शृणुध्वम् ।
३ KSS यथाहिता ।
४ KSS श्रमार्तौ ।
५ KSS लज्जिता ।
६ KSS, NS ग्लाने ग्लाना ।
७ NS, KSS चापल्ये ।
८. KSS विबोधाभावमर्षेषु ।



षट्त्रिंशद् दृष्टयो ह्येता यथावत् समुदाहृता[1] ।
रसजाना तु दृष्टीना भावजानां तथैव च ॥ ९७ ॥

तारापुटभ्रुवां कर्म गदतो मे निबोधत ।
भ्रमण वलनं पातश्चलन सम्प्रवेशनम् ॥ ९८ ॥

विवर्तनं समुद्वृत्त निष्काम: प्राकृत तथा ।
पुटान्तर्मण्डलावृत्तिस्तारयोर्भ्रमण स्मृतम् ॥ ९९ ॥

चलनं गमन त्र्यस्र पातन स्रस्तता तथा ।
चलन कम्पनं ज्ञेय प्रवेशोऽन्तःप्रवेशनम् ॥ १०० ॥

विवर्तन कटाक्षस्तु समुद्वृत्त समुन्नतिः ।
निष्कामो निर्गम प्रोक्त[2] प्राकृत तु स्वभावजम् ॥ १०१ ॥

[3]अथैषा रसभावेषु विनियोगं निबोधत ।
भ्रमण चलनोद्वृत्ते निष्कामो वीररौद्रयो ॥ १०२ ॥

निष्कामण सचलन कर्तव्यं तु भयानके ।
हास्यबीभत्सयोश्चापि प्रवेशनमिहेष्यते ॥ १०३ ॥

पातनं करुणे कार्यं निष्कामणमथाद्भुते ।
प्राकृत शेषभावेषु शृङ्गारे च विवर्तितम् ॥ १०४ ॥

स्वभावसिद्धमेवैतत् कर्म लोकक्रियाश्रयम् ।
एवं रसेषु[4] भावेषु ताराकर्माणि योजयेत्[5] ॥ १०५ ॥

[6]अथात्रैव प्रवक्ष्यामि प्रकारान् दर्शनस्य तु ।
सम साच्यनुवृत्ते च [7]ह्यालोकितविलोकिते ॥ १०६ ॥

प्रलोकितोल्लोकिते [8]चाप्यवलोकितमेव च ।
समतारं च सौम्य च यद्दृष्ट तत् सम स्मृतम् ॥ १०७ ॥

---

१ KSS प्रतिपादिता ।
२. GOS प्राक्त ।
३ KSS तथैषा ।
४. KSS सर्वेषु ।
५. KSS ताराकर्म नियोजयेत् ।
६. KSS तथा तत्रैव वक्ष्यामि प्रकारं ।
७. KSS तु आलोकित ।
८ KSS चावलोकि NS चाप्यवलोकित ।

पक्ष्मान्तर्गततारं च स्निग्धं साचीकृतं[1] तु तत् ।
रूपनिर्वर्णना[2] युक्तमनुवृत्तमिति स्मृतम्[3] ॥ १०८ ॥

सहसा दर्शनं यत् स्यात्तदालोकितमुच्यते ।
विलोकितं पृष्ठतस्तु पार्श्वाभ्यां तु प्रलोकितम् ॥ १०९ ॥

ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यधः ।
इत्येषु दर्शनविधिः सर्वभावरसाश्रयः ॥ ११० ॥

ताराकृतोऽस्यानुगतं पुटकर्म निबोधत ।
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम् ॥ १११ ॥

विवर्तितं स स्फुरितं पिहितं सवितार्डितम्[4] ।
विश्लेषः पुटयोर्यस्तु स तून्मेषः प्रकीर्तितः ॥ ११२ ॥

[5]समागमो निमेषः स्यादायामः प्रसृतं भवेत्[6] ।
आकुञ्चितं कुञ्चितं स्यात् समं स्वाभाविकं स्मृतम् ॥ ११३ ॥

विवर्तितं समुद्वृत्तं स्फुरितं स्पन्दितं तथा ।
स्थगितं पिहितं प्रोक्तमाहतं तु वितार्डितम् ॥ ११४ ॥

अथैषां रसभावेषु विनियोगं निबोधत ।
क्रोधे [7]विवर्तितं कार्यं निमेषोन्मेषणं सह ॥ ११५ ॥

विस्मयार्थेषु हर्षे च वीरे[8] च प्रसृतं स्मृतम् ।
अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् ॥ ११६ ॥

शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं तथा[9] ।
सुप्तमूर्च्छितवातोष्णधूमवर्षाञ्जनार्तिषु ॥ ११७ ॥

नेत्ररोगे च पिहितमभिघाते वितार्डितम् ।
इत्येवं रसभावेषु तारकापुटयोर्विधिः ॥ ११८ ॥

---

१ KSS साचिकृतं ।
२ KSS रूपनिर्वापणा ।
३ KSS स्फुटम् ।
४ NS, KSS प्रस्फुरितं पिहितं सवितालितम् ।
५ KSS समागतो ।
६ KSS आयामस्तु प्रसारितम् ।
७ KSS विवर्तितं कार्यं ।
८ KSS वीर्ये ।
९ KSS भवेत् ।

[1]कार्यानुगतमस्यैव भ्रुवो कर्म निबोधत ।
[2]उत्क्षेपः पातनश्चैव भ्रुकुटी चतुरं भ्रुवोः ॥ ११९ ॥
कुञ्चितं रेचितं चैव सहजं चेति सप्तधा ।
[3]भ्रुवोरुन्नतिरुत्क्षेपः सममेकैकशोऽपि वा ॥ १२० ॥
[4]अनेनैव क्रमेणैव पातनं स्यादधोमुखम् ।
भ्रुवोर्मूलसमुत्क्षेपात् भ्रुकुटी परिकीर्तिता ॥ १२१ ॥
चतुरं किञ्चिदुच्छ्वासान्[5]मधुरायततया भ्रुवोः ।
एकस्या [6]उभयोर्वापि [7]मृदुभङ्गस्तु कुञ्चितम् ॥ १२२ ॥
एकस्या एव ललितादुत्क्षेपाद्रेचितं[8] भ्रुवः ।
सहजातं तु सहजं कर्म स्वाभाविकं स्मृतम् ॥ १२३ ॥
अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम् ।
कोपे वितर्के हेलायां लीलादौ सहजे तथा ॥ १२४ ॥
श्रवणे दर्शने चैव भ्रुवमेकां समुत्क्षिपेत् ।
[9]उत्क्षेपो विस्मये हर्षे रोषे चैव द्वयोरपि ॥ १२५ ॥
[10]आसूयितजुगुप्सायां हास्ये घ्राणे च पातनम् ।
क्रोधस्थानेषु दीप्तेषु योजयेत् भ्रुकुटीं बुधः ॥ १२६ ॥
शृङ्गारे ललिते सौम्ये सुखे स्पर्शे प्रबोधने ।
एवं विधेषु भावेषु चतुरं तु प्रयोजयेत् ॥ १२७ ॥
[11]स्त्रीपुरुषयोश्च संलापे नानावस्थान्तरात्मके ।
मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते ॥ १२८ ॥

---

१ KSS कार्येऽनुगत ।
२. KSS उत्क्षेप ।
३ NS. भ्रुवोरुन्नति ।
४. NS सममेकैकशोऽप्येवं पातनं स्यादधोगतिः । KSS एकस्या वा द्वयोर्वापि पातनं स्यादधोमुखम् । GOS,- Same as above
५ NS, KSS मधुरायततयोः ।
६ GOS हि द्वयोर्वापि ।
७. KSS, NS मृदुभङ्गेन ।
८ KSS रेचिते ।
९ KSS उत्क्षेपे ।
१० KSS NS समूयितजुगुप्सायां ।
११ KSS NS do not read this verse

[1]निकुञ्चित तु कर्तव्य नृत्ते योज्य तु रेचितम् ।
अनाविद्धेषु भावेषु विद्यात स्वाभाविक बुध. ॥ १२९ ॥
इत्येव तु भ्रुव प्रोक्त नासाकर्म निबोधत ।
नता मन्दा विकृष्टा च सोच्छ्वासा च विकूणिता[2] ॥ १३० ॥
स्वाभाविका[3] चेति बुधै षड्विधा नासिका स्मृता ।
नता मुहु श्लिष्टपुटा मन्दा तु निभृता स्मृता ॥१३१॥
विकृष्टोत्फुल्लितपुटा सोच्छ्वासा कृष्टमारुता ।
[4]विकूणिता सकुचिता समा स्वाभाविका स्मृता ॥१३२॥
नासिकालक्षण ह्येतत् विनियोग निबोधत ।
मन्दोत्कम्पसमायुक्ते नारीणामनुरोधने ॥१३३॥
नि श्वासे च नता कार्या नासिका नाट्ययोक्तृभि ।
विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता ॥१३४॥
निर्वेगोत्सुक्यचिन्तासु मन्दा शोके च योजयेत्[6] ।
[7]तीव्रगन्धे विकृष्टा तौ रौद्रे वीरे तथैव च ॥१३५॥
[8]इष्टघ्राणे तथोच्छ्वासे दीर्घोच्छ्वसा प्रयोजयेत् ॥
[9]विकूणिता च कर्तव्या जुगुप्सायामसूयतादिषु ॥१३६ ॥
[10]कार्या शेषु भावेषु तज्ज्ञैः स्वाभाविका तथा ।
क्षाम फुल्ल च घूर्ण च कम्पित कुञ्चित समम् ॥१३७॥
षड्विध गण्डमुद्दिष्ट तस्य[11] लक्षणमुच्यते ।
क्षाम [12]चावनत ज्ञेय फुल्ल विकसित भवेत् ॥१३८॥

---

१ KSS विकुञ्चित ।

२ NS, KSS विघूर्णिता ।

३ NS स्वाभाविकी ।

४ NS, KSS विघूर्णिता ।

५ KSS, NS read as विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता ।

६ KSS, मन्दा शोके तु कीर्तिता NS मन्दा शोके प्रकीर्तिता ।

७ KSS, NS विकृष्टा तीव्रगन्धार्धश्वासरोषभयातिषु ।

८ KSS, NS सोच्छ्वासा मधुरे गन्धे दीर्घोच्छ्वासकृतेषु च ।

९ NS विघूर्णितोक्ता हास्ये च जुगुप्सायामसूयिते ।
KSS विघूर्णितो हास्येषु जुगुप्सायामसूयिते ।

१०. KSS, NS स्वाभाविका शेषभावेष्विन्येव नासिका स्मृता ।

११. NS, अस्य ।

१२. KSS, NS त्ववनत ।

[1]विवृत्त घूर्णमत्रोक्त कम्पितं स्फुरितं भवेत् ।
स्यात् कुञ्चित सकुञ्चित सम प्राकृतमुच्यते ॥१३९॥
गण्डयोर्लक्षण प्रोक्तं विनियोग निबोधत ।
क्षाम तु खेषु कर्तव्य प्रहर्षे [2]फुल्लमेव च ॥१४०॥
[3]पूर्णमुत्साहगर्वेषु रोमहर्षेषु कम्पितम् ।
कुञ्चित च सरोमाञ्च स्पर्शे शीते भये ज्वरे ॥१४१॥
प्राकृत शेषभावेषु गण्डकर्म भवेदिति ।
[4]विवर्तनं कम्पन च विसर्गो विनिगूहनम् ॥१४२॥
सन्दष्टकं [5]समुद्गं च षट् कर्माण्यधरस्य तु ।
विकूणितं विवर्तस्तु वेपनं कम्पन स्मृतम् ॥१४३॥
विनिष्कामो विसर्गस्तु प्रवेशो विनिगूहनम् ।
[6]सन्दष्टक द्विजैर्दष्ट समुद्गः सहजोन्नति ॥१४४॥
[7]द्वयोरोष्ठलक्षणं प्रोक्त विनियोग निबोधत ।
असूयावेदना[8]वज्ञाभयादिषु विवर्तनम् ॥१४५॥
कम्पनं [9]वेपना शीतभयरोषजयादिषु हास्या ।
स्त्रीणां विलासे विब्बोके विसर्गो रञ्जने तथा[10] ॥१४६॥
विनिगूहनमायासे सन्दष्टं [11]क्रोधकर्मसु ।
समुद्गस्त्वनुकम्पायां चुम्बने चाभिनन्दने ॥१४७॥
द्वयोरोष्ठकर्माण्युक्तानि चिबुकस्य निबोधत ।
कुट्टनं खण्डनं छिन्न [12]चुक्कितं लेहनं (ग्रहण) समम् ॥१४८॥

---

१ NS, KSS उन्नत पूर्णमत्रोक्तं ।
२. KSS फुल्लमिष्यते ।
३ KSS, NS पूर्णमुन्नाह ।
४. NS कम्पे ।
५. KSS निवर्तने ।
६. NS. समुद्गश्च ।
७ KSS सन्दष्टको द्विजैर्दष्ट. समुद्ग सहिता गति । NS सन्दष्टको द्विजैर्दष्टः समुद्वृत्त समुद्गकः ।
८ KSS. लज्जावस्यादिषु । NS लज्जालस्यादिषु ।
९ NS कोपशीतातिभयरोगजयादिषु KSS वेपन शीतज्वररोषजयादिषु ।
१०. NS विसर्ग. सुरते स्मृतः KSS विसर्गे रञ्जने तथा ।
११. KSS क्रोधकर्माणि ।
१२. NS चिक्कित KSS चुक्कित । -

दष्टं च दन्तक्रियया चिबुकं त्विह लक्ष्यते ।
कुट्टनं दन्तसंघर्षः 'सस्फोटं खण्डनं मुहुः ॥१४९॥
छिन्नं तु गाढसंश्लेषश्चुक्कितं दूरविच्युतिः[2] ।
लेहनं जिह्वया लेहः किञ्चित् श्लेषः[3] समं भवेत् ॥१५०॥
दन्तैर्दष्टेऽधरे दष्टमित्येषां विनियोजनम् ।
भयशीतज्वरक्रोधग्रस्तानां कुट्टनं भवेत् ॥१५१॥
जपाध्ययनसंलापभक्ष्ययोगे च खण्डनम् ।
छिन्नं व्याधौ भये शीते व्यायामे रुदिते मृते[4] ॥१५२॥
जृम्भणे [5]चुक्कितं कार्यं तथा लेह्ये च लेहनम् ।
समं स्वभावभावेषु संदष्टं[6] क्रोधकर्मसु ॥१५३॥
इति दन्तोष्ठजिह्वानां करणाच्चिबुकक्रिया ।
विधुतं [7]विनिवृत्तं च निर्भुग्नं भुग्नमेव च ॥१५४॥
विवृतं च तथोद्वाहि कर्माण्यास्यजानि तु ।
व्यावृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् ॥१५५॥
[8]अवाङ्मुखत्वं निर्भुग्नं स्याद्भुग्नं किञ्चिदायतम् ।
विश्लिष्टोष्ठं च विवृतमुद्वाह्युत्क्षिप्तमेव च ॥१५६॥
विनिवृत्तमसूयायामीर्ष्याक्रोधकृतेन च ।
अवज्ञा विहृतादौ च स्त्रीणां कार्यं प्रयोक्तृभिः ॥१५७॥
विधुतं वारणे चैव नैवमित्येवमादिषु ।
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु ॥१५८॥
भुग्नं लज्जान्विते योज्यं यतीनां तु स्वभावजम् ।
निर्वेदौत्सुक्यचिन्तासु भये च विनिमज्जने ॥१५९॥
विवृतं चापि विज्ञेयं हास्यशोकभयादिषु ।
स्त्रीणामुद्वाहि लीलायां गर्वे गच्छत्यनादरे ॥१६०॥

---

१. GOS सफोट ।
२. NS चिक्ति दूरमुद्यतम । KSS चुक्तिम दूरविच्युति ।
३. KSS., NS. चेष्टः ।
४ NS., KSS रुचिते क्षिते ।
५ NS चिक्ति KSS चुक्तिने ।
६. KSS, NS. सन्दष्टः ।
७. KSS., NS. विधुत विनिवृत्त च निर्भुग्न भुग्नमेव च ।
८ KSS, NS. अर्वाङ्मुख च ।

एवं नामेतिकार्यं च कोपयास्य विचक्षणै. ।
समं साध्यन् वृत्तादि यच्च दृष्टिविकल्पितम् ॥१६१॥
तज्ज्ञैस्तेनानुसारेण कार्यं तदनुग मुखम ।
अथातो [1]मुखरागस्तु चतुर्धा परिकीर्तित ॥१६२॥
स्वाभाविक प्रसन्नश्च रक्त श्यामोऽर्थसंश्रय ।
स्वाभाविकस्तु कर्तव्य स्वभावाभिनयाश्रय ॥१६३॥
मध्यस्थादिषु भावेषु मुखराग प्रयोक्तृभि ।
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा ॥१६४॥
वीररौद्रमदाद्येषु रक्त स्यात् करुणे तथा ।
भयानके सबीभत्से श्याम सञ्जायते मुखम् ॥१६५॥
एवं भावरसार्थेषु मुखराग प्रयोजयेत् ।
शाखाङ्गोपाङ्गसंयुक्त कृतोऽप्यभिनय शुभ ॥१६६॥
मुखरागविहीनस्तु नैव शोभान्वितो भवेत् ।
शरीराभिनयोऽल्पोऽपि मुखरागसमन्वित ॥१६७॥
द्विगुणां लभते शोभा रात्राविव निशाकर ।
नयनाभिनयोऽपि स्यान्नानाभावरसास्फुट[2] ॥१६८॥
मुखरागान्वितो यस्मान्नाट्यमत्र प्रतिष्ठितम् ।
यथा नेत्र प्रसर्पेत मुखभ्रूदृष्टिसंयुतम् ॥१६९॥
तथा भावरसोपेत मुखराग प्रयोजयेत् ।
इत्येव मुखरागस्तु प्रोक्तो भावरसाश्रय ॥१७०॥
अत परं प्रवक्ष्यामि [3]ग्रीवाकर्माणि वै द्विजा ।
समा नतोन्नता त्र्यस्रा रेचिता कुञ्चिताञ्चिता ॥१७१॥
वलिता च निवृत्ता च ग्रीवा नवविधा स्मृता ।
समा स्वाभाविकी ध्यानस्वभावजपकर्मसु ॥१७२॥
नता नतास्यालङ्कारबन्धे कण्ठावलम्बने ।
उन्नताम्युन्नतमुखी ग्रीवा चोर्ध्वनिवेशने ॥१७३॥
त्र्यस्रा पार्श्वगता ज्ञेया [4]स्कन्धभारेऽति [illegible] स्थिते ।
रेचिता विधुतभ्रान्ता हावे नयननर्तयो ॥१७४॥

---

१ KSS. मुखरागश्च चतुर्धा परिकीर्तित ।
२. NS., KSS नानाभावरसान्वित: ।
३. NS ग्रीवाकर्म द्विजोत्तमा: ।
४ NS. चैव KSS चैव स्कन्धभारेऽथ ।

कुञ्चिताकुञ्चिते मूर्ध्नि [1]धारिते गलरक्षणे ।
अञ्चितापसृतोऽन्यस्थेऽशकपोलोर्ध्वदर्शने[2] ॥१७५॥
पार्श्वोन्मुखो स्याद्वलिता [3]ग्रीवाभेदेश्च वीक्षणे ।
निवृत्ताभिमुखीभूता स्वस्थानाभिमुखादिषु ॥१७६॥
इत्यादिलोकभावार्था ग्रीवाभङ्गैरनेकधा ।
ग्रीवाकर्माणि सर्वाणि शिर कर्मानुगानि हि[4] ॥१७७॥
शिरस कर्मण कर्म ग्रीवाया सम्प्रवर्त्तते ।
इत्येतल्लक्षण प्रोक्त शीर्षोपाङ्गसमाश्रयम् ॥१७८॥
अङ्गकर्माणि शेषाणि [5]गदतो मे निबोधत ॥१७९॥

इति भरतीये नाट्यशास्त्रे उपाङ्गविधान नाम अष्टमोऽध्याय ।



---

१ NS भारिते ।
२. KSS, NS कपोलनदर्शने ।
३ KSS NS ग्रीवाभङ्गे ।
४. KSS. च ।
५. KSS, NS वदतो ।

॥ श्रीः ॥

# नाट्यशास्त्रम्

## नवमोऽध्यायः

एवमेतच्छिरोनेत्रभ्रूनासौष्ठकपोलजम् ।
कर्म लक्षणसंयुक्तमुपाङ्गानां मयोदितम् ॥१॥
हस्तोरःपार्श्वजठरकटीजङ्घोरुपादतः ।
लक्षणं सम्प्रवक्ष्यामि विनियोगं च तत्त्वतः ॥२॥
[1]हस्तादीनां प्रवक्ष्यामि कर्म नाट्यप्रयोजकम्[2] ।
यथा येनाभिनेयं च तन्मे निगदतः शृणु[3] ॥३॥

---

### अभिनवभारती

अन्तर्ध्रियन्ते गात्राणि यत्स्पर्शविवशात्मिते ।
स्पर्शनस्मात्रवपुषं स्तुमस्तं परमेश्वरम् ॥

निरूपणमनुसन्धानहृदयं प्राक्तनाध्यायोपसंहारपूर्वकं वस्त्वन्तरमासूत्रयन्नाह— एवमेतदित्यादि । क्रियत इति कर्म अभिनेयमित्यर्थः, हस्तेति हस्तादीनामिति पादान्तानामनेनाध्यायेन लक्षणं वक्ष्यामि । विनियुज्यतेऽनेनेति विनियोगः तद्यथा— एषोऽग्नि वर्धमानकनिरूपणे (९-२०)' इत्यादि । तत्रैनिवर्तंध्यता— तद्यथा—'प्रविरलमलिनाङ्गुलि' (९-२०) इत्यादि । तत्त्वत इति । अभिनयस्य द्विविधा इतिकर्तव्यता लोकधर्मी नाट्यधर्मी च । अथवा द्विविधा आन्तरा बाह्या च । तत्रान्तरा चित्तवृत्त्यर्पकत्वेनानुभावस्य, यथा—गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशोत्थितः' (९-१०) इति । केवलबाह्या अवयवरूपा वा, यथा— पद्मकोशस्य कथमपि निरूपणे । नाट्यधर्म्यपि द्विधा—नाट्यप्रयोगमूलभूतकैशिकीसम्पादनोचितालौकिकशोभाहेतुः यथा— आवेष्टितादिचतुर्विधकरणरूपा । कामित्ववशेन लोकमुपजीवति, यथा - वर्णान्तरेण हस्तेन तत्र तत्र व्यवहारेण लोक उपजीव्यते । लोको ह्यनिर्देश्यमानमपि वस्तु निर्दिदिक्षुरीदृग्तादृगमित्यस्मिन्नभिनयक्रमे कथयतीति प्रयुक्तमेव चतुरैः । एव जनान्तिकादौ वाच्यम् । नटसमयमात्ररूपा नाट्यधर्मी, समयस्यापि किञ्चित्करस्य कल्पने प्रयोजनाभावात् ।२-१।

---

१. NS KSS हस्ताना ।
२. KSS. नाट्यप्रयोजम् ।
३. GOS गदतो मे निबोधत ।

पताकस्त्रिपताकश्च तथा वै कर्तरीमुख ।
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च ॥४॥
मुष्टिश्च शिखराख्यश्च कपित्थ [1]खटकामुख ।
सूच्यास्य. पद्मकोशश्च तथा[2] वै सर्पशीर्षकः ॥५॥
मृगशीर्ष परो ज्ञेयो हस्ताभिनययोक्तृभि ।
[3]काङ्गुलकोऽलपद्मश्च चतुरो भ्रमरस्तथा ॥६॥
हंसास्यो हंसपक्षश्च सन्दंशो मुकुलस्तथा ।
ऊर्णनाभस्ताम्रचूडश्चतुर्विंशतिरीरिता[4] ॥७॥
असंयुता संयुताश्च गदतो मे निबोधत ।
अञ्जलिश्च कपोतश्च कर्कट स्वस्तिकस्तथा ॥८॥
[5]खटकावर्धमानश्च ह्युत्सङ्गो निषधस्तथा ।
दोल पुष्पपुटश्चैव तथा मकर एव च ॥९॥
गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च ।
एते तु संयुता हस्ता मया प्रोक्तास्त्रयोदश ॥१०॥

---

हस्तानुपदिशति पताक इत्यादिना । तथा चशब्देन त्रिपताक प्रकारस्तस्यैव कर्तरीमुख इति दर्शनात्तन्निष्पत्तय महिना कार्यदृष्टाध्ययनपरत्वाऽस्मत्तध्यान (विषयक) शब्दवद्धस्तान्तरेऽपि दृश्यमानेन विधेन तद्बुद्धि दर्शयति । एवमन्येऽपि त्रिप-ताकादिवद् व्याख्येया । क्वचित्तु हस्तपदग्रहणान्तरस्वीकाराय हंसपक्षश्च सन्दंश इति सन्दंशशब्दानन्तर चकारेण अङ्गुष्ठमध्यमाग्रनिष्पीडिताग्रमनर्जनीलक्षणोऽपि पुष्पभास्वरविद्युदाद्यभिनयविषये नृत्ताचार्यप्रवाहसिद्ध कोऽहंसलिप्तोऽपि हस्त सञ्ज्ञको भवतीति हस्तान्तराण्युत्प्रेक्ष्याणि । ते स्वमयुता अपि भवन्ति । संयुक्तकरण कार्य इति (६।२०) वक्ष्यते यत्र यत्राप्येतन्नास्ति तत्रापि प्रयोगयुक्त्या हस्तद्वयप्रयोगो भवत्येव, यथा परेण द्वारे नीयमाने अयाप्यतावद्धस्तादिक्षेत्रे पराङ्मुखस्य प्रयोगः । एव प्रतापनादावपि । एवमन्यत्रोत्प्रेक्षणीयम् । किन्च पताकादीनामपि द्वयो युगपत् प्रयोगे युतत्वमभिनेयविशेषे । यथा छेदाभिनय करिष्यस्य ऊर्ध्वाधो-भावेन पताकस्य 'कुणिच्छ मह्, अस्नमच्छ्रर महिमोमहिच्छत्रमति" । चित्राभिनये

---

१ KSS कटकामुख ।
२. GOS, सर्पशिरा तथैव च ।
३ *NS लाङ्गलोत्पलपद्मश्च KSS लाङ्गलोत्पलपद्मश्च । NS, KSS add a* line in this verse मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभि ।
४ NS, KSS चतुर्विंशदिमे करा ।
५ KSS कटका ।

नृत्तहस्तानतश्चोर्ध्वं गदतो मे निबोधत ।
चतुरस्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ ॥११॥
स्वस्तिकौ विप्रकीर्णौ चाप्यरालखटकामुखौ ।
आविद्धवक्त्रौ सूच्यास्यौ रेचितावर्धरेचितौ ॥१२॥
उत्तानावञ्चितौ चापि पल्लवौ च तथा करौ ।
नितम्बौ चापि विज्ञेयौ केशबन्धौ तथैव च ॥१३॥
सम्प्रोक्तौ करिहस्तौ च लताख्यौ च तथैव च ।
पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा ॥१४॥
ज्ञेयौ गरुडपक्षौ च हंसपक्षौ तथैव च ।
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ तथा ॥१५॥
उरोमण्डलिनौ चैव उरःपार्श्वार्धमण्डलौ ।
मुष्टिकस्वस्तिकौ चापि नलिनीपद्मकोशकौ ॥१६॥
अलपद्मावुल्बणौ च ललितौ वलितौ तथा ।
सप्तषष्टिकरा ह्येते नामतोऽभिहिता मया ॥१७॥
[1]यथा लक्षणमेतेषां कर्माणि च निबोधत ।
[2]प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ॥१८॥

---

चैतत् । एते तु मयुना एव । तत्त्वेन एव, पताकादीनामपि प्रयोगे तत्त्वभिरसंयुतत्वात् । एते च तयोदश संयुतासंयुतभिदेनेन न स्वार्थस्य गमकाः ॥८-१०॥

एतेषां स्वभिनयहस्तानामन्तःतत्प्रतिमतां दर्शयितु, मार्गाणां मसृणीकृतछिद्रवर्तनात्मकतया मसृणतादि निवृत्तये बालुकोत्क्षेपणेन, उद्‌घनोत्सारणेन छिद्रच्छादनेन चैकवर्तनानुप्रवेशवत् एवाभिनेयार्थे विश्रान्तता अथापि, नृत्तस्य च वस्तुभूतस्वेनोत्तरस्य स्वरूपमभिधातु, तयोरन्यो भेदस्थानिति नृत्तादिविषये तु भूषाङ्कुरादावुपयोगमपि च दर्शयितु नृत्तशब्देन विशेष्य निर्दिशति नृत्तहस्तानित्यादिना । संयुतासंयुतहस्तोपजीविन एतस्येतात्विनोऽपि प्रयुज्यन्ते [नात्रैतत्त्व इति अन्येऽपि. न दर्शयन्ति दर्शयन्ति (?)] तस्मिद यथा लक्षणं यथा च कर्मण्यभिधेयतेति तथा निबोधतेति सम्बन्धः ॥१७॥

अथ यथोद्देशं पताकादीनां लक्षणमाह—प्रसारिता समा इति । समा इति प्रवृत्तिस्था इत्यर्थः । प्रसारिताग्रा वा इति पाठः । प्रसारिता प्रधाना इत्यर्थः । समाः सहिता अविरलाः । कुञ्चितत्वं पादस्य वक्ष्यते तल्लक्षणोपजीवनेनाङ्गुष्ठ-

---

१. KSS यथ ।
२ KSS, NS प्रसारिताग्राः सहिता ।

एष प्रहारपाते प्रतापन नोदने प्रहर्षे च ।
गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशोत्थित[1] कार्य ॥१९॥
एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च ।
सयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः ॥२०॥
स्वस्तिकविच्युतिकरणात् पल्लवपुष्पोपहारशष्पाणि ।
विरचितमुर्वीसंस्थं यद् द्रव्यं तच्च निर्देश्यम् ॥२१॥
स्वस्तिकविच्युतिकरणात् पुनरेवाधोमुखेन कर्तव्यम् ।
संवृतविवृत पाल्य छन्न निबिड च गोप्य च ॥२२॥

सन्निवद्य कार्य इत्यर्थः । पताकाकारत्वात्पताक । अतएव पताकाप्यनर्त-वाभिनया । एवमन्येष्वपि हस्तेषु नामनिर्वचनानुसारेण विनियोग प्रदर्शनीय । प्रविरलचलिताङ्गुलित्वादियोगेऽपि एकदेशविकारे तत्त्वप्रत्यभिज्ञानान्मूलाधारोद्-धारेव मूलसन्निवेशाश्रयणात्पताकात्वमेव । एवमन्यत्रापि ॥१८॥ प्रहारस्य पातने कर्तव्ये, स्वय, परेण च क्रियमाणे । प्रतापने शीतशमनायाग्निस्पर्शप्रदृ्त, राज्ञा च प्रतापे शत्रुहृदयस्य निमित्तभूतप्रसिद्धिविशेषेऽस्मिन् तथा ऐक्ये च आतत नर्तेन

उत्प्रेक्षणीयः । प्रहारे हृदयलग्नतल ईषत्प्रलम्बमान , प्रहर्षे च रोमाञ्चे सम्मुख उद्गत । अपिशब्दार्थसहितो (अह) यथा अस्मदयो नर्तकि अहमपि ममापि मयापि मय्यपीत्यादौ गर्वगर्भे प्रयोगे पाश्वन्तिरात्स्वात्मानमागच्छल्ललाटाभिमुख ललाटस्थ कर्तव्य ॥१९॥ एष इति एतस्मिन्नर्थेऽभिनेता स्या (दिति से) द्विभक्तिरतन्त्रा, एतदर्थनिरूपण इत्यर्थ । अग्ने धारा ज्वाला । पुष्पवृष्टिग्रहणमप्रसिद्धपातुरत्नादिवृष्टयन्तरोपलक्षणम् । सयुतकरण इति हस्तद्वयमीदृश कर्तव्यमित्यर्थ संयुतासंयुतसम्बन्धा लोकोचिता चलन-लक्षणा क्रिया यस्य तेनाग्निज्वालामूर्ध्वगमन, जलधारास् अधोगमनमङ्गुलीनामूर्ध्व-मुखहस्तस्य पुष्पवृष्टौ शिरोदेशे अधोमुखस्य स्थितस्य समास्फलनाङ्गुलेरधोगमनमिति सगृहीतम् । तेनैवाभिनोऽपि यत्प्रयोगदर्शन तदवरुद्धम् । प्रविरलाश्चलिताश्चलिता प्रविरल कृत्वा चलिता अङ्गुल्यो यत्रेति समास । संयुतहस्तलक्षणात् स्वस्तिकमुख-योश्च नृत्तहस्तलक्षणाद्वा ।२०।

तेन सम्मुखौ पताकौ मणिबन्ध भुवि न्यस्तौ कृत्वा बाहुपरिभ्रमणयुक्तया स्वपार्श्व-गम विच्युतिः तत्क्रियाया । पल्लव स्वल्पोदक सरः । पुष्पप्रकर नरप च हृद्य तृण

1. NS, KSS. ललाटदेशस्थित ।
2. KSS विर्तृ ।

अस्यैव चाङ्गुलीभिरधोमुखप्रस्थितोत्थितचलाभिः ।
वायूर्मिवेगवेलाक्षोभश्चौघश्च[1] कर्तव्यः ॥२३॥
उत्साहनं बहु तथा महाजनभाषापुष्करप्रहतम्[2] ।
पक्षोत्क्षेपाभिनयं रेचककरणेन[3] प्रयुञ्जीत ॥२४॥
[4]परिघृष्टतलस्थेन तु धौतं मृदितं प्रमृष्टपिष्टे च ।
पुनरेव शैलधारणमुद्घाटनमेव[5] चाभिनयेत् ॥२५॥
एवमेव प्रयोक्तव्यः स्त्रीपुंसाभिनये करः ।
पताकाभ्यां तु हस्ताभ्यामभिनेयः प्रयोक्तृभिः ॥२६॥
[6]दशास्यश्च शतास्यश्च सहस्रास्यस्तथैव च ।
अतः परं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् ॥२७॥
पताके तु यदा वक्रानामिका त्वङ्गुलिर्भवेत् ।
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत ॥२८॥

---

यच्च भूमौ पिच्छिलं बलितण्डुलवैचित्र्यस्थापनेन स्थापितं तदभिनयेदिति लोकगोप- जीविनां नाट्यधर्मी ॥२१॥ पुनरेवेति वचनात् स्वस्तिकस्तद्विच्युति विच्युतिपूर्वं स्वस्तिक इति क्रम । तत्राधोमुखेन स्वस्तिकेन तद्विच्युत्या च संवृतविवृतमर्थं संवृतमर्थं च विवृतम् । यथा "घटयेद्वाटकवाटघट्टितं जवेन" इति । पारय पतनाद्रक्षणीयं विच्युतिपूर्वकं शीघ्रं स्वस्तिककरणात्, छन्नं निबिडं स्पष्टं तथैव गोप्यं, अन्यो मा द्राक्षीदिति तज्जातं करणं स्वस्तिककरणात् । प्रकारेण अपाये, अनाच्छन्ने, अनति- निबिडे अगोप्ये चाभिनयः ॥२३॥ स च स्वस्तिकविच्युतिरूप इति दर्शयति । रेचयति स्वमग्निर्वेगाद्व्यापयति स्वक्षेत्राद्या या क्रिया तद्रेचककरणम् । तथा यथायोगं तय परस्योत्साहनं प्रेरणं उत्साहजननं सत्पुरुषाभिनयनं च विरलाङ्गुलिक्षेपेणात्पल्लवा- कारवत् प्रधानं वस्तु अक्रमकरणेन निजपार्श्वगमनेन पादवान्तिरगात् । प्रागुन्नतमूर्ध्व- गमनात् पुष्करग्रहणने अघ पातन, पक्षं पतत्रिणां मुहुर्मुहुः रदिसेत्रे उत्साहनवत् उत्क्षेपं कृतमधोर्ध्वगमनेन । अभिनयशब्दबलात्त्व च । अभिनयशब्दस्य वैचित्र्यं दर्शयन्त उपाध्याया व्याचक्षते अभिशब्देनाभिमुख्य, नशब्देन निर्देशो, यशब्देन

---

१ NS क्षोभाश्चौघश्च KSS क्षोभश्चौघश्च ।
२ NS प्रहतिम् ।
३ KSS करणे ।
४ KSS परिमृष्ट ।
५ NS मुत्पाटन ।
६ NS , KSS Omit this verse

आवाहनमवतरणं विसर्जनं वारणं प्रवेशश्च ।
उन्नामनं प्रणामो निदर्शनं विविधवचनं च ॥२९॥

मङ्गल्यद्रव्याणां स्पर्शः शिरसोऽथ सन्निवेशश्च ।
उष्णीषमुकुटधारण नासास्यश्रोत्रसंवरणम् ॥३०॥

अस्यैव चाङ्गुलीभ्यामधोमुखप्रस्थितोत्थितचलाभ्याम्¹ ।
लघुपवनस्रोतोभुजगभ्रमरादिकान्² कुर्यात् ॥३१॥

अश्रुप्रमार्जने³ तिलकविरचनं रोचनयालम्भनकं च ।
त्रिपताकानामिकया स्पर्शनमलकस्य⁴ कार्यञ्च ॥३२॥

---

यदयों लक्ष्यते, तेन स्वपार्श्वोन्मुखदेशागमनेनाभिमुख्यमभिमुखस्य पार्श्वक्षेपे तु रेचन-पूर्वमधोमुखोत्तानपरिवर्तनेन च यच्छब्दार्थमभिनयेदिति ।२४। परिमण्डल दीर्घप्रसारणार्थं तोऽर्थे भ्रमणो वाऽर्थे समन्तादर्थे च, तेन परिघृष्ट यत्तत् तत् द्वितीयपताकाहस्तेन पताकाकारेण क्षालनं मर्दनं मार्जनं पेषणं तद्विशिष्टमपि द्रव्यमभिनयेत् । यथा-क्रम च परिवाक्यार्थे योज्य पुनश्शब्द । पवनोद्धारण अंसशिलादेरुत्पाटनम् । चकाराद्वरदानमभयदानमित्येवमाद्यभिनयेत् । परिघृष्टेतीनिवर्तयता प्रसवना वारयितुमेवकार, "एतत् पुणामिज्जिइत्ति कोणे जिजिआलिह" (?) इत्यादौ यथापुन शब्द एवार्थयोतकस्तथाङ्गिकेऽपि पताकादिरूर्ध्वमिति व्यवहारदर्शनात् ॥२५॥ न चैतावानेवास्य विषय इति दर्शयितुमाह—एवमनेन प्रकारेण स्वबुद्ध्या तां तामिति-कर्तव्यतामुत्प्रेक्ष्य प्रयोक्तव्य । स्त्रीपुंसयोरुभयोरपि अभिनेत्रारभिनेययोर्वा । अन्ये तु नपुंसकलिङ्गस्य स्त्रीपुंसाभ्यामेव स्वीकारात् समस्ते प्रकारैरभिनेतव्ये विधिदृष्टेति-कर्तव्यतायुक्तस्यार्थस्य प्रयोग इत्याहु ॥२६॥

अथ त्रिपताकमाह पताकेत्यादि । अनामिका यत्र वक्रीयमाणतर्जनीमध्यमाना त्रितृणा पताकावदवस्थानात् त्रिपताका त्रित्वस्याभिनेयत्वात् । कर्तव्यमभिनेयम् ।२७-२८। आवाहन पराङ्मुखीनतर्जनीमध्यमाकुञ्चनात्, "आर्ये इतस्तावत्" इत्यादौ । रथादे अवतरणमधस्तलकृतेन पार्श्वाभिगमनात् "अवतरत्वायुष्मान्" इत्यादौ । विसर्जनमनादरकृत बहिरङ्गुलिद्वयक्षेपात् । वारण "एवं मा कार्षी" रिति प्राङ्मुखे-नाङ्गुलिद्वयचलनात् । प्रवेशन पार्श्वतलेनाग्रगमनात् यावत्प्रविशामीति । यथोन्नामन चिबुकादौ लालनेनोत्तानाङ्गुलिद्वयात् । प्रणमन शिरोगतेन पादतः प्रणयनात् स्वम-र्पणम् । प्रदर्शनमुपमानोपमेयभावेनपरिवर्तनेनाङ्गुलिद्वयेन । विविध विचित्रमिदं वा स्यादिदं चेत्यादिना अङ्गुलियुगनामोन्नामात् । वचनं आपणं मुखक्षेत्रे उत्ता-

---

१. KSS प्रस्थितो स्थितचलाभ्याम् ।

२ NS लघुमुखनजगा ।। KSS लघुचटपवनमा ।। नृत्यमन ।

३ KSS, NS अश्रुप्रमार्जनतिला⋯ ।

४ NS स्पर्शनमलिकस्य KSS दर्शनमलकस्य कार्यञ्च ।

अभिनयास्त्वनेनैव वानरप्लवनोर्मयः ।
पवनश्च स्थिरश्चैव नाट्ये नाट्यविचक्षणैः ॥३७॥

समुन्नमताङ्गुष्ठ कार्यो बालेन्दुदर्शने ।
पराङ्मुखस्तु कर्तव्यो याने नृणां प्रयोक्तृभिः ॥३८॥

त्रिपताके यदा हस्ते भवेत् पृष्ठावलोकिनी ।
तर्जनी मध्यमायाश्च तदासौ कर्तरीमुखः ॥३९॥

[1]पथि चरणरचनरञ्जनरङ्गणकरणान्यधोमुखेनैव ।
ऊर्ध्वमुखेन तु कुर्याद् दष्ट शृङ्गं च लेख्यं च ॥४०॥

पतनमरणव्यतिक्रमपरिवृत्तवितर्कित तथा न्यस्तम् ।
भिन्नवलितेन कुर्यात् कर्तर्यास्याङ्गुलिमुखेन ॥४१

संयुतकरणो वा स्यादसंयुतो वा प्रयुज्यते तज्ज्ञैः ।
हंसचमरमहिषसुरगजवृषगोपुरशैलशिखरेषु ॥४२॥

यस्याङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन चापवत् ।
सोऽर्धचन्द्रो हि विज्ञेयः करः कर्मास्य वक्ष्यते ॥४३॥

एतेन बालतरव शशिलेखाकम्बुकलशवलयानि ।
[3]निर्याटनमायस्त मध्यौपम्य च पीन च ॥४४॥

---

तोरड" (?) इति स्पर्शनमलक्ष्य स्पर्शनाद्धस्ताग्रनयन, यथा रत्नावल्यामुदयनेन सुसङ्गतायाः । अनिरूप्य मनाटस्य दर्शनमत्राञ्जनेनोत्तानालरमञ्जनमित्यादा-विरमन्ये ॥३९॥

तर्जनीमुखं लक्षयति त्रिपताक इति । चरणेन वर्गो नीयते । अवलोकिनीति अपदिशति इति यावत्। तर्जनी ईदृशमेव रूप साधयते तथानीयते । पथीति पुष्पवदमिन इव इत्यादौ मार्गप्रदर्शने, तेनात्राधोमुखेनेति सम्बध्यते । चरणस्य रचन यम्बूनिरादिना पदभङ्गादिक्रिया रञ्जनमलक्तकेन । रङ्गणमिति हृदयमिति गन्ध कुङ्कुमादिकृत-स्तनपृष्ठे भङ्गतिलकादि न करोति रङ्गयति । एवकारेण तर्जनीमुखलक्षणमुख-स्याधोगतनानन्तरमेव पृष्ठावलोकित्व पुनरधोगमन पुन पृष्ठावलोकनमिति चलन माह् । दष्टमिति दशन ततुल्य च स्तनादि नासिकाक्षेत्रात् कर्णान्त गच्छता, शृङ्ग स्वङ्गक्षेत्रे हस्तद्वयेन, लेख्य पत्रादिविष्टस्य वाचनम् । व्यतिक्रमोऽपराध ॥४०॥

---

१ NS पथिकरण KSS पथिरचनारचनरञ्जनगमन ।

२ NS does not read it

३ KSS निघटन ।

[1]रशनाजघनकटीनामाननतलपत्रकुण्डलादीनाम् ।
कर्त्तव्यो नारीणामभिनययोगोऽर्धचन्द्रेण ॥४५॥

आद्या धनुर्नता कार्या कुञ्चिताङ्गुष्ठकस्तथा ।
शेषा भिन्नोर्ध्ववलिता[2] ह्यरालेऽङ्गुलयः करे ॥४६॥

एतेन सत्त्व[3]शौण्डीर्यवीर्यधृतिकान्तिदिव्यगाम्भीर्यम् ।
आशीर्वादाश्च तथा भावा[4] हितसञ्ज्ञका कार्याः ॥४७॥

एतेन पुनः स्त्रीणां केशाना सग्रहोत्क्षेपौ[5] ।
सर्वाङ्गिक तथैव च [6]निर्वर्णनमात्मन कार्यम् ॥४८॥

कौतुकविवाहयोगं प्रदक्षिणेनैव सप्रयोग च ।
अङ्गुल्यग्रस्वस्तिकयोगात् परिमण्डलेनैव ॥४९॥

---

परिवृत्त पराङ्मुखीभूत विपर्यस्त च । वितर्धनमूहनम् । न्यस्त निक्षेपणम् । भेदन वैपरीत्य मध्यमयोस्तर्जनीपृष्ठगत्व, चलन पुन स्वस्थाप्तिस्तयो समाहारे द्वन्द्वः । एतेन यथायोग सघातविमूहनविपर्यस्तप्रयोगो द्विस्त्रिश्चेत्याद्यूह्यम् । कर्तर्यास्यस्य कर्तरीमुखस्य यदङ्गुलीरूप मुख प्रधान तेन भेदनवलनसहितेनेति सङ्गति ।४१-४२।

अर्धचन्द्रमाह—सहाङ्गुष्ठेनेति । यदङ्गुष्ठोऽपि विनत. चापवदिति श्लिष्टाहस्तत्व निषेधति । स्यात इति नाम्नैव लक्षरूप ॥४३॥ बालतरवश्चोर्ध्वं गच्छता, उपर्युत्तानेन, अर्धेन्दुरित्यन्वर्थवलाल्लभ्यम् । तेन शशिलेखेत्यनेन लेखामात्रमभिनेय विश्लिष्टतर्जनीकेनेत्युक्त भवति ।

कम्बुरिति शख एवानेनाभिनेय तद्ग्रहण तु नर्तने वक्ष्यते । प्रकोष्ठान्तरमुमुक्तेन वलय । निर्घाटन चन्द्रानिष्क्रासनमिति । तस्यायम्नमटवीयोपगमित्यमत्, आयम्त मेद पराङ्मुखेन गण्डभ्रूविभ्रमात्तमभिनयेत् । मध्ये उदरादौ । उपमीयत इत्युपमा तत्र ध्यत्र, तेनायमर्थो मध्यस्य यदुपमीयमानस्य वाडयं तदभिनयेत् । पीन च पीवर, यर्थान्यमध्यमेव । चकारादर्धचन्द्रद्वयेनाभिनयेत् । अन्ये तु पान चषकादि व्याचक्षते पानमिति पठन्त ।४४। जघनो - कटेरग्रभाग, पार्श्वभागश्च कटी । आननतले च पत्राणि भङ्गा । तलपत्रमाभरणविशेष पत्र दन्तपत्र

---

१. NS रशना ।
२. KSS ह्यरालाङ्गुलय ।
३ NS शौण्डीर्यधृतिकान्तिदिव्य । KSS. शौण्डीर्यवीर्यधृतिकान्तिदिव्य ।
४. KSS भावाभिसंज्ञका कार्या ।
५ KSS सद्ग्रहोत्क्षेपौ ।
६ KSS निर्वहण ।

एतेन स्वभिनेय नाहं न त्वं न कृत्यमिति चार्थे ।
आवाहने विसर्गे धिगिति वचने च सावज्ञम् ॥५४॥

अङ्गुल्यो यस्य हस्तस्य तलमध्येऽग्रसंस्थिता ।
तासामुपरि चाङ्गुष्ठः स मुष्टिरिति संज्ञितः ॥५५॥

एष प्रहारे व्यायामे निर्गमे [1]पीडने तथा[1] ।
संवाहनेऽसियष्टीनां कुन्तदण्डग्रहे[2] तथा ॥५६॥

अस्यैव तु यदा मुष्टेरूर्ध्वोऽङ्गुष्ठः प्रयुज्यते ।
हस्तः स शिखरो नाम तदा[3] ज्ञेयः प्रयोक्तृभिः ॥५७॥

---

।५०। आह्वाने पनदङ्गुलि । निवारणे बहिः क्षिप्ताङ्गुलि । निर्माणे अपूर्वं उदय यथा उदितो भगवान् मृगलाञ्छन । ' भगव मिअलञ्छण'' इत्यादौ । निक्षेपेण वा मान परिच्छेदो वर्तन वा, यथा "जलणिहिचल वेआ" (जलनिधिचल वेगात्) इति । निर्वाण तृणाद्युत्पाटनमित्यन्ये । अमृता सृष्टिर्वापिका निर्वाणमित्यन्ये । अनेक पृथग्भूत संबन्धाभावरूपं यत्रोच्यते तत्र पुन बहिः क्षिप्ताङ्गुले प्रयोग । यथा "कहिं हु कहिं हु" इत्यादौ । गन्धस्य सुरभित्वादाघ्राणम् । शुभ शुभे चैव इति पाठ । एष हस्त इत्यर्थ. । चैवेत्यन्ये पठन्ति अध्याहार कल्पयन्त , एवकारेण सर्वत्रनात्व हस्तस्येत्याह ।५१। त्रिपताकस्य मान्यावाहनमवतरणमित्यादीन्यभिनेयानि तान्यत्रास्य यत्प्रयोगानु-युक्त्या सम्पत्तिर्भवति ततेनापि प्रयोज्यानि स्त्रीभि. न तु नाम्ना त्रिपताक. निषिध्यते, पुंहस्त्रिपताकस्थानेऽरालो निषिध्यते ।५२।

शुकतुण्डमाहरालस्येति । नु पूर्वस्माद्विशेषमाह् । द्वितीयस्तु रपिकाध्यार्थ, तर्जन्या अपि वक्रिमाणमनुजानाति तदाकारत्वात् । शुकतुण्ड इति शब्देन प्रत्ययमेव एव ह्ययं वाक्यार्थं । नाहं न त्वं, न कृत्यमिति । न च सर्वथा निषेधे अयमभिनय., अपि तु अर्थे अर्थनाया सम्यामीप्स्याप्रियपक्षग्रहादाविति यावत्, अर्थनमर्थ , "अकर्तारि" इति घञ् । तावत यदाह्वान विसर्गश्च पञ्चभिरङ्गुलिभि क्षेपात्स्पृश्य इति वर्तव्यता, सकृत्, द्विस्त्रिर्वा प्रयोगयुक्त्या । धिगित्यनेन निन्दार्थेनानु-पादेय लक्ष्यते, "विल्लोल नालवश्रवानददूषितेन" इत्यादावयमभिनय इत्यर्थः ॥५३-५४॥

मुष्टिमाह्—अङ्गुल्यो यस्येति । तलमध्य इति अङ्गुष्ठमूलान्तिकं दर्शयति । अग्रे सम्यक्स्थिता इति अग्रगोपनेन विरलत्वं च परिहरति । उपरीति मध्यमाङ्गुलिदेशं सम्पीडयन्नित्यर्थ । संज्ञित. लोके ह्यत्रैव मुष्टिशब्द प्रसिद्ध इत्यर्थः । व्यायाम इति

---

१. NS., KSS स्तनपीडने ।
२ NS., KSS. दण्डकुन्तग्रहे ।
३. NS तथा ।

रश्मिकुशाङ्कुशधनुषां तोमरशक्तिप्रमोक्षणे[1] चैव ।
अधरोष्ठपादरञ्जनमलकस्योत्क्षेपणं चैव ॥५८॥

अस्यैव शिखराख्यस्य ह्यङ्गुष्ठकनिपीडिता[2] ।
यदा प्रदेशिनी वक्रा स कपित्थस्तदा स्मृतः ॥५९॥

असिचापचक्रतोमरकुन्तगदाशक्तिवज्रबाणानि[3] ।
शस्त्राण्यभिनेयानि तु [4]कार्यं सत्यं च पथ्यं च ॥६०॥

उत्क्षिप्तवक्रा[5] तु यदानामिका सकनीयसी ।
अस्यैव तु कपित्थस्य तदासौ खटकामुखः[6] ॥६१॥

होत्रं हव्यं छत्रं प्रग्रहपरिकर्षणं व्यजनकञ्च ।
आदर्शधारणं खण्डनं तथा पेषणं चैव ॥६२॥

---

युद्धे प्रतिमल्लप्रकोष्ठग्रहणे खङ्गयुद्धे च । निगमे आर्द्रकादिस्वरसस्य निष्कासने । पीडने स्तनपीडने गोमहिष्यादिदोहने च । संवाहने मृदुपीडने अथवा मृदुपीडने । अमिमर्दीनामिव मर्दानामिति बहुवचनग्रहणात् छुरिकायुद्धदण्डग्रहणे इत्यादि योज्यम् । तथेति संवाहने धारणे मारणे मार्जने वा ॥५५-५६॥

शिखरमाह अस्यैव चेति । पुनर्मुष्टिग्रहणं (मुष्टिरत्नं नामधिकारे ?) मुष्टेराकारे शिखरेणाभिनेये इये सुरकर्मणा च दृढपीडनादौ मुष्टिमाह—अत एवोक्तं प्रयोक्तृभिरिति । रश्मि प्रग्रहः किरणो वा तेषां संवाहनं ग्रहणमिति सम्बन्ध । अत्र च द्वयोरेकस्य वा प्रयोगः उत्तानाधोमुखपार्श्वगादिभिन्न । प्रयोगानुसारेणालकस्योत्क्षेपण गण्डस्थलादेरुत्पीडनं वा कुटिलीकरणार्थम् ॥५७-५८॥

कपित्थमाह अस्यैवेति, नामोच्चारणस्य पूर्ववत् प्रयोजनं, कपित्थाकारेऽस्मिन् अङ्गुष्ठनर्जन्याबङ्गुली । शस्त्राणीति शस्त्रधारणानीत्यर्थः । कार्यं सुकृतम्, अत्र छोटिकाप्रयोग ॥५९-६०॥

अथ खटकामुखमाह उत्क्षिप्तवक्रेति । उत्क्षिप्ता सती वक्रा अनामिका कपित्थस्येति पुनर्नामोच्चारणात् शरावर्षणकार्यमत्यपथ्यादावस्य प्रयोग । तुरेव पूर्वस्मादिशेषे, मुद्रितायोऽवधारणे । विरलत्वं मनाक् अनामिकाकनिष्ठिकयोर्भवति सकनीयसी । सहशब्दात् विश्लेषाशङ्का न स्यात् । खट् काक्षायामित्यस्मात् श्रुतदृशामानीयेषु

---

१. KSS., NS प्रमोक्षण ।
२. KSS., NS मुसंस्पृष्ठनिपीडिता ।
३. GOS. वज्रवर्माणि ।
४. KSS., NS. read as कार्यं सत्यं च पथ्यं च ।
५. KSS चक्रा ।
६. KSS. कटकामुख. ।

आयतदण्डग्रहणं मुक्ताप्रालम्बसंग्रहं चैव ।
स्रग्दामपुष्पमाला वस्त्रान्तालम्बनं चैव ॥६३॥
मन्थनशरावकर्षं पुष्पावचयप्रतोदकार्याणि ।
अङ्कुशरज्वाकर्षं स्त्रीदर्शनमेव कार्यं च ॥६४॥
[५]खटकास्ये यदा हस्ते तर्जनी सम्प्रसारिता ।
हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥६५॥
[६]अस्य विविधान् योगान् वक्ष्यामि समासतः प्रदेशिन्याः ।
ऊर्ध्वनततलोलकम्पितविजृम्भितोद्वाहितचलायाः ॥६६॥

---

मुनः । खटको विटद्विभ्रमगनियु , तस्य आमुखे यतोऽयं वध्यतेऽत खटकामुख ॥५१॥ होत्र स्रुगादि उत्तानेन । हव्यमाज्याद्यामुनेन । प्रग्रहस्य वल्गादे परिकर्षणं गतिरोधनाय । व्यजनं तालवृन्तादिकं चलता । आदर्शधारणं समुनेन । आदर्शो ज्ञातो यासिन्ना गीरीश्वराकाङ्क्षिभ्यामनेनाभिनयन्ति खण्डनं तालवृन्तादिव्यजनव्यापारो वा । पेषणं कुङ्कुमस्य मृगमदचन्दनचन्द्रादे हस्तद्वयेन मागद्वये दार्घवृतथग्रक्रमणाद्यैः, "परिवृत्तपाद" इत्यादौ ॥६२॥ आयतदण्डकाष्ठादाना ग्रहणं, मुक्ताप्रालम्बानामिमआशीर्वाहुद्वयगुमयान्तग्रहणसूचकम् ?। बाहुद्वयोर्योभयान्ताभ्यां संग्रहणं सूच्यते । वस्त्रान्तालम्बनं च विवाहे वधूना प्रणयकोपादौ च यथानुसरणे । आकर्षणस्य केलिवशेन वेणादेरयमभिनयः । उत्तरीयालम्बनं स्वभावायोगात् स्त्रीप्रदर्शनेऽयमभिनय , स्वक्षेत्रे चातुरश्रार्थं तत्कर्परावधि द्वितीयस्य निवेशं कुर्वन्ति ॥६३-६४॥

सूचीमुखमाह खटकास्य इति सूच्याकारमेवास्य मुखम् ।६५। नता अधोमुखी लोला पार्श्वान्तर यान्ती, कम्पिता तत्रैव स्पन्दमाना, विजृम्भिता व्याकुलाञ्चिता, प्रसारिता उद्वाहिता ऊर्ध्वं गच्छन्ती, चला अभिनयत्वेन व्रजन्ती ।६६। चक्रम् आयुधे कर्मोपकरणे रथाङ्गे च राष्ट्रजने च । चक्रे ऊर्ध्वमुख पार्श्वगत पार्श्वान्तर भ्रमन्ती कार्या, विद्युदूर्ध्वमुखा गतागता । एवमन्यत्रापि ज्ञेयम् । मञ्जर्यो लता , कर्णचूलिका कर्णपूर कुटिलगतयो मीनाद्या , साधुवादः भद्रं शोभनमित्याद्या ।६७। वालपर्णा पृथगुपादान गतिवैलक्षण्यात्मीनेभ्य । वल्लीलतामञ्जरीणामवान्तरभेद उत्प्रेक्ष्य तद्यथा - अलाबूभृतयो वल्लय ॥ द्राक्षाप्रभृतयो लता । चूतादीना मञ्जर्य । शिखण्ड कुमाराणा काकपक्ष । परिपतनं पात , वक्रं वक्रत्व, मण्डलं वर्तुलत्व, समाहारे द्वन्द्व । तद्धलोलितस्योक्तिः प्रयोगवृत्त्या वैचित्र्येण विभजनीया ।६८। भूयो बहुतरमित्यस्मिन्नर्थे चायमभिनय- । तारा नक्षत्राणि । घोणा नासिका । एकः एकत्वसङ्ख्या । दण्ड पर प्रतितर्जनम् । यष्टि लगुड पूर्ववर्ता, नक्षत्रे तर्जन्यूर्ध्वा । दष्ट्रिषु चकाराद्दिष्टत्वेन प्रसिद्धे-

---

५ KSS कटकास्ये ।

६. KSS, NS अस्या ।

चक्र तडित्पताकामञ्जर्यं कर्णचूलिकाश्चैव ।
कुटिलगतयश्च सर्वे निर्देश्याः साधुवादाश्च ॥६७॥
बालोरगबल्यव[1]धूपदीपवल्ले लताशिखण्डाश्च ।
परिपतनवक्रमण्डलमभिनेया[2] न्यूर्ध्वलोलितया ॥६८॥
वदनाभ्यासे कुञ्चिततविजृम्भिता वाक्यरूपणे कार्या[4] ।
भूयश्चोर्ध्वविरचिता ताराघोणैकदण्डयष्टिषु च ।
क्नता च पुन कार्या दंष्ट्रिषु च तथास्ययोगेन ॥६९॥
पुनरपि मण्डलगतया सर्वग्रहण तथैव लोकस्य ।
[3]प्रणतोन्ते च कार्ये ह्रास्वे दीर्घे च दिवसे च ॥७०॥
[श्रवणाभ्यासे वक्रा विजृम्भणा वाक्यरूपणावसरे ॥]
[5]मेति वदेति च योज्या प्रसारितोत्कम्पितोत्तना ॥७१॥

ष्वपि राक्षसादिषु । आस्ये योगो भाग मृक्लिक्षणस्तेन सम्बद्धा नना सती । तथेति तेन दंष्ट्राकारेण वार्या सम्मुखनला कार्येत्यर्थ ।६८। पुनरपीत्युर्ध्वाधोमुखत्वप्रसृतम वधार्यते । ग्रहणमिति भावप्रधान सर्वशब्द, कार्त्स्न्येन ग्रहणमित्यर्थ । लोकस्य प्रत्यक्षेणावलोक्यमानस्य वा स्मर्यमाणस्य वा । तथैवेति अयमिति पुरोवर्तिनिर्देशेन, स इति च कर्णक्षेत्रे परोक्षवृत्तिनिर्देशेन, ग्रहणस्य लोकत स्मरणात्मकमभिनय । एव-शब्देन प्रथमत्वात् आद्यो मुख्यो ह्रस्वश्च, वीप्सापेक्षया तत्र तत्र प्रणता, ऊर्ध्वा यान्तो दीर्घे तून्नता विपरीता दिवसे एकतोऽधस्तलप्रणता अन्यत प्रोत्तानतलोन्नता परस्पर-श्लिष्टा मयूवनकरणत्वेन पार्श्वालिपर्वसञ्चरणादुदयास्तमयसूचिका ।७०। पूर्वं कुञ्चिता ततो विजृम्भिता प्रसारिता वक्रान्तिके कार्यविचारे यदा वाप्यु-मारिताभिनीयते । "श्रवणाभ्यासे वक्रा जृम्भण उन्मुखना वाक्यरूपणावसरे" इति वा पाठ. । मेति वारणार्थे प्रसारिता, वदेति अत्रार्थे उत्कम्पितोत्तानाकुञ्चितप्रसारितेत्यर्थ । रोपस्य दर्शने स्वेदमार्जन च प्रसारितैव ललाटपट्टादौ स्वेद हरन्ती ।७१। कुन्तला केशा, गण्डाश्रया पत्रभङ्गादय तद्विषयेऽभिनये कर्तव्ये गर्वे योऽहङ्कार तत्राभिनये ललाटगना । रिपो: प्रत्यक्षस्य निर्देशे अधनना, परोक्षस्य रणपूर्वसम्भे तु विशेष । अनुसन्धाने त्रितयात्मिका "स वाय दुष्टात्मा" इति । क्रोध इति सरम्भपूर्वं कोप

१ KSS NS पल्लव ।
२ KSS मभिनेय चोर्ध्व ।
३ NS. प्रणताकृता च कार्या ह्रस्वदर्घे च दिवस च । KSS प्रणतोकृता च कार्या ह्स्वदर्घ (?) च ।
४. KSS वाक्यरूपणे कार्या । NS वाक्यरूपणे मुखे ।
५ KSS, NS वेति वारणि (?) ।

कार्या प्रकम्पिता रोषदर्शने स्वेदरमणे चैव[1] ।
कुन्तलकुण्डलाङ्गदगण्डाश्रयसंश्रयेऽभिनय-॥७२॥

गर्वेऽहमिति ललाटे रिपुनिर्देशे तथैव च क्रोधे ।
कोऽसाविति निर्देशेऽथ कर्णकण्डूयने चैव ॥७३॥

संयुक्ता संयोगे कार्या विश्लेषिता वियोगे च ।
कलहे स्वस्तिकयुक्ता परस्परोन्पीडिता बन्धे ॥७४॥

द्वाभ्यां तु वामपार्श्वे[2] दक्षिणतो दिनदिनावसानानि ।
अभिमुखपराङ्मुखाभ्यां[4] विश्लिष्टाभ्यां प्रयुञ्जीत ॥७५॥

पुनरपि च भ्रमिताग्रप्रदेशा शिलावर्तनं[3] अङ्गुलीषु ।
परिवेषणे तथैव हि कार्या चाधोमुखी नित्यम् ॥७६॥

श्लिष्टा ललाटपट्टेऽप्यधोमुखी शम्भुरूपणे कार्या ।
शक्रस्याप्युत्ताना तजूर्ध्वस्तिर्यक्स्थिता कार्या ॥७७॥

द्वाभ्यां सन्दर्शयेन्नित्यं सम्पूर्णं चन्द्रमण्डलम् ।
श्लिष्टा ललाटे-शक्रस्य कार्या ह्युत्तानसंश्रया ॥७८॥

---

पूर्वकृत इति ।७२। विमर्शात्मा प्रश्न, तत्रासाविति च दूरगतवस्तु निर्देशे । कर्णकण्डूयन प्रसिद्धम्, कटुकवचनमपि च ।७३। संयुक्तेति अग्रतलयो पार्श्वैर्न्तर्यादित्यर्थ । तद्विभागात् भुवि विश्लेषिताभ्यां द्वाभ्यामभिमुख पराङ्मुखाभ्यां वामपार्श्वं गच्छन्तीभ्यां दिनावसानमभिनयेत् । वामो हि सोमस्य दक्षिणस्तु सूर्यस्यायभाग दक्षिणपार्श्वं गच्छन्तीभ्यां निशावसानम् । विश्लिष्टाभ्यामिति तालमात्रान्तराभ्यामिति दीर्घह्रस्वतारतम्यासंचारिकाभ्याम् द्वाभ्यां तु इत्यङ्गुष्ठ प्रसारणे सति आकुञ्चनादित्यर्थ ॥७३।७४।७५॥ परिमण्डलं भ्रमितया मण्डलमादर्शयेच्च चक्रस्येति चशब्दो विकल्पार्थ । हरस्य भगवतस्तृतीयनयने प्रदर्शिते सति यदभिनयन तत्र कर्तव्ये सति ललाटे उर्ध्वा वा कार्या । एव शक्रस्याभिनये ललाट एवोत्ताना तिरश्चीना च, अङ्गुल्या एवात्र प्राधान्यात् । सरकामुख मध्यमयां यल्लोके महेश्वरशक्राभिनयन दृश्यते तत्रालाक्षणिक इति मन्तव्यम् ॥७६।७७।७८॥

---

1. NS स्वेदमार्जने ।
2. KSS गण्डाश्रयमण्डनाभिनये ।
3. KSS वामगमन ।
4. NS, KS पराङ्मुखाभ्यां ।
5. १७ KSS, NS read it after पुनरपि इत्यादि two verses

परिमण्डल भ्रमितया मण्डलमावर्शयेच्च[1] चन्द्रस्य ।
हरनयने च ललाटे शक्रस्याभ्युत्थाना[2] ॥७६॥

यस्याङ्गुल्यस्तु वितता सहाङ्गुष्ठेन कुञ्चिता ।
ऊर्ध्वा ह्यसगताग्राश्च स भवेत् पद्मकोशक ॥८०॥

बिल्वकपित्थफलानां ग्रहणे कुचदर्शनस्य नारीणाम् ।
ग्रहणे ह्यामिषलाभे भवन्ति ता कुञ्चिताग्रास्तु ॥८१॥

यदुजातिबीजपूरकमामिषखण्ड च निर्देश्यम् ।
वेद्यार्चनबलिहरणे समुद्गके[3] साग्रपिण्डदाने च ।
कार्य. पुष्पप्रकरश्च पद्मकोशेन[4] हस्तेन ॥८२॥

मणिबन्धनविश्लिष्टाभ्या प्रविरलचलिता[5] गुलिकराभ्याम् ।
कार्यो विवर्तिताभ्यां विकसितकमलोत्पलाभिनय ॥८३॥

अङ्गुल्य. सहता.[6] सर्वा सहाङ्गुष्ठेन यस्य च ।
तथा निम्नतलश्चैव स तु सर्पशिरा कर ।८४॥

अथ पद्मकोश लक्षयति यस्याङ्गुल्यस्तु विरला इति । उन्नताः चतुर्भेद रचना इति यावत् । पद्मस्येव कोशोऽस्मिन्कर विनत यस्येति तथा ॥७६॥ ग्रहणमिति गृह्यतेऽनेनेति ग्रहणमभिनय इत्यर्थ । एव कुचौ दृश्यते अनेनेति कुचदर्शन पद्मकोश इति पूर्वेण सम्बन्धः । बिल्वादीनां तु ग्रहणे न[?] एवाङ्गुल्योऽग्रपर्यन्तनिकुञ्चिताश्च भवन्ति । कपित्थादीनामामिषलाभे आमिषग्रहणे च । तामिनयन ग्रहणे । आमिषलाभे सति यद् ग्रहण तदेवेति केचित् ॥८०॥ बलेर्हरण दान देवेभ्यप्रापण वा । अग्रपिण्डो गवादे, भोजनाय, यत्र यज्ञोत्सवादौ नान्दीमुखश्राद्धादावग्रतः स्थाप्यते न दानं, तदग्रपिण्डदानम् । पुष्पप्रकरश्चेति द्विस्त्रिविकीर्णाग्रेण ॥८१-८३॥

सर्पशिरसमाह अङ्गुल्यस्सहता इति । सहता श्लिष्टा सहाङ्गुष्ठेनेति कुञ्चिताङ्गुष्ठ इत्यर्थ । निम्न तल मध्यस्यानिमुन्नस्य, सर्पशिरस्तुल्यत्वात् । नामैव नाम ॥८४॥ सलिलप्रदान देवेभ्य, समिधे च प्रतिग्रहार्थं प्रदीयमान प्रति-

१ KSS, NS मण्डलयोर्दर्शयेच्च ।
२. KSS, NS शक्रस्याभ्युत्थानात् ।
३ KSS समुद्गे चाग्र ।
४. NS पद्मकोषेण ।
५ KSS, NS मणिबन्धश्लिष्टाभ्या ।
६. KSS सहिताः ।

एष सलिलप्रदाने भुजगतौ तोयसेचने चैव।
आस्फोटने च योज्य करिकुम्भास्फालनाद्येषु ॥८५॥

अधोमुखीनां सर्वासामङ्गुलीनां समागमः।
कनिष्ठाङ्गुष्ठकावूर्ध्वौ स भवेत् मृगशीर्षकः ॥८६॥

इह सांप्रतमस्तीति [1]शक्तेश्चोत्सासनेऽप्यथ पाते च।
स्वेदापमार्जनेषु च कुट्टमिते [2]प्रचलितस्तु भवेत् ॥८७॥

त्रेताग्निसंस्थिता मध्या तर्जन्यङ्गुष्ठका यदा[3]।
काङ्गुलेऽनामिका वक्रा यदा चोर्ध्वा कनीयसी[4] ॥८८॥

एतेन तरुणफलानि नानाविधानि च लघूनि।
कार्याणि [5]रोषजानि स्त्रीवचनान्यङ्गुलिक्षेपैः ॥८९॥

मरकतवैदूर्यादेः[6] प्रदर्शनं सुमनसां च कर्तव्यम्।
ग्राह्यं मरालपदमिति तज्ज्ञैरेवं प्रयोगेषु ॥९०॥

---

गृहीतुरभिनयो येन। सर्पगमनमधोमुखः। तोयोपसेचन कुङ्कुमचन्दनादौ। आस्फोटन मल्लयुद्ध करवाद्यादिषु ॥८५॥

मृगशीर्षकमाह मृगस्येव शिरस्स्थे शृङ्गे यस्य। शीर्षशब्दः प्रकाशार्थतरम् ॥८६॥ इहेति प्रत्यक्षाधिकरणनिर्देशे। सांप्रतमिति वर्तमानकालनिर्देशे। अस्तीत्यभ्युपगमाभिनये संभवाभिनये च। अत्रेति वर्तमाननिर्देशेन गतार्थत्वेऽपि साभिनयेन सूचीमुखेन बाधा माभूदिति पुनरुपात्तम्। एतावत्यधोमुखोऽयम्। शक्तेश्चोत्सासनेऽक्षपाते चोर्ध्वमुखः। गण्डादौ स्वेदमार्जने स्वेदाभिमुखतया तथामुखः। कुट्टमित इत्येतन्नामदुःखोपचारेण स्त्रीणां चेष्टालङ्कारः तत्राभिमुखतलो बाह्ये विस्तीर्णाङ्गुलि॥८७

काङ्गुलमाह - त्रेताग्निसंस्थिता इति। त्रेतारूपा अग्नय आहवनीयादयः तद्वत्संस्थानमासामिति। विरलयोः श्लिष्ट एवाग्रेऽङ्गुष्ठ इत्यर्थः। कङ्गु प्रियङ्गुः तां लातीति तस्यायमर्थः। कङ्गुल्यपने कीदृशः करो भवति। काङ्गुलो वृश्चिक इति तु केचित् ॥८८॥ एतेन तरुणानि फलानि मुक्ताफलबदराणि अस्या तेषामुपोते,

---

1. NS, KSS शक्यश्चेत्यालने।
2. KSS कुट्टिमिते।
3. KSS वक्रा।
4. NS चोर्ध्वकनीयसी।
5. KSS रोषजानि।
6. KSS, NS वैदूर्यादीनां।

आवर्तिता करतले यस्याङ्गुल्यो भवन्ति हि ।
'पार्श्वागतविकीर्णाश्च स भवेदलपल्लवः' ॥६१॥

प्रतिषेधकृते योज्य कस्य त्वमसि नास्त्यवचनेषु ।
पुनरात्मोपन्यासे स्त्रीणामेतेन कर्तव्यं ॥६२॥

तिस्र प्रसारिता यत्र तथा चोर्ध्वा कनीयसी ।
तासां मध्ये स्थितोऽङ्गुष्ठः स करश्चतुरस्मृत ॥६३॥

'नयविनयनियमसुनिपुणबालातुर'सत्यकैतवार्थेषु ।
वाक्ये युक्ते पथ्ये सत्ये प्रशमे च विनियोज्य ॥६४॥

एकेन द्वाभ्यां वा किञ्चिच्चलितेन हस्तेन ।
'विकृतविचारितचरित वितर्कित' लज्जित चैव ॥६५॥

नयनौपम्य पद्मदलरूपण हरिणकर्णनिर्देश[7] ।
सयुतकरणेनैव तु चतुरेणैतानि कुर्वीत ॥६६॥

---

लघुनीति परिमितानि मृत्पिण्डसदृशानीत्यर्थः । अङ्गुल्य अङ्गुष्ठस्तर्जनीमध्यमे च तासां बहिः क्षेप ॥८९-९०॥

*अलपल्लवमाह — आवर्तिता इति । कनिष्ठाया क्रमेण वर्तना परिवर्तनं वा कुर्वन्त्य । इयन्तीरयन्त चस । चलपल्लवाकारत्वादलपल्लव । अलपद्म इति च तन्नाम । प्रतिषेधस्य कृते अभिनयार्थाय । कस्य त्वमसि, नास्तीति च मिथ्याधिक्षेपार्थे च । शून्यवचनानि 'तच्छास्त्रमसत्प्रयुक्त' मित्यादीनि । पुनरर्थे अहमर्थे उपन्यासे च विस्मये अभिनयः स्त्रीणामुपन्यस्यते पुन पुनरभिनीयते विस्मयापादकत्वादित्युपन्यास ॥६१-६२॥*

चतुरमाह तिस्र प्रसारिता यत्रेति । मध्य इति मध्यमाया मध्य एव । चनयोऽङ्गुलयोऽङ्गुष्ठश्लिष्टत्वेन सम्यग्विमन्निति, अप्रत्ययाकारान्तश्चतुरशब्द । चतमृणामभिनयनाद्वा चतुरः सत्यकैतवादिषु मुखरागभेदाद्भेद विवृन प्रकारमेकेन अनावेशे, तु द्वाभ्याम् नयनयोरभिनेययो. उपमानोपमेयभावे पद्मदलादिके चैकावितां निर्देष्टुमेवकार. ॥ ६१-६६ ॥ पद्मन लीलायनमभिनीयत इति

---

१ KSS पार्श्वगता ।

२. NS पथक ।

३ KSS नयननिपुण ।

४ KSS शाठ्य ।

५ KS विधुतविचारितचरित । NS विधुतविचारितचरित ।

६. KSS विवर्जित ।

७. KSS, NS. निर्देशम् ।

[1]लीला रतो रुचि च स्मृतिवृद्धिविभावनाः क्षमा पुष्टि च ।
[2]सन्ताआमाग्रा प्रणय विचारणं सङ्कुतं शौचम् ॥९७॥

चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुरतं शीलम् ।
प्रश्नं वार्नायुक्तिं वेष मृदुप्रादवल्लं स्तोकम् ॥९८॥

विभवाविभौ सुरतं गुणागुणौ यौवनं गृहान् दारान् ।
नानाप्रवर्णांश्च तथा चतुरेणैव प्रयुञ्जीत ॥९९॥

पितमृष्वेन तु कुर्यात् रक्तं पीतं च मण्डलकृतेन[3] ।
परिमृदितेन तु नील वर्णांश्चतुरेण हस्तेन ॥१००॥

मध्यमाङ्गुष्ठसन्दंशो वक्रा[4] चैव प्रदेशिनी ।
ऊर्ध्वमन्ये प्रकीर्णे च द्वयङ्गुष्ठौ भ्रमरे करे ॥१०१॥

पद्मोत्पलकुमुदानामन्येषां चैव दीर्घवृन्तानाम् ।
पुष्पाणां ग्रहणविधि कर्तव्यं कर्णपूरश्च ॥१०२॥

विच्युतश्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
बालालापे च शीघ्रे च ताले विश्वासने तथा ॥१०३॥

तर्जनीमध्यमाङ्गुष्ठास्त्रेताग्निस्था निरन्तरा ।
भवेयुर्हंसवक्त्रस्य शेषे द्वे सम्प्रसारिते ॥१०४॥

---

कान्ति दीप्तिम् । विभावन ऊहापोहरूपा प्रकर्षं वा दृष्टिव्यापारे तु कर्तरीमुख एव । सङ्कुत मैत्रीमन्योन्यमप्रश्लेषात् ॥९७॥ माधुर्यं हृद्यत्व, शरारादिवचनादिषु दाक्षिण्यमानुकूल्य, मार्दवं मृदुत्वम अङ्गुष्ठमध्यमादर्शनेन । शील स्वभाव । वेष नेपथ्य वेश वा गणिकास्थानम् ॥९८॥ विभव पार्श्वस्थस्य स्वच्छता, अविभवम- गच्छता शांगिनयेविरोधमन्यद्वुत्प्रेक्ष्यम् । दारान् शयुताभ्यां सयुतस्वस्तिकेन दर्शयेदिति । एव वक्ष प्रभृतिनिरोऽन्ये क्षेत्रविशेषे । संयुतासंयुतत्वे चञ्चलत्वस्थिरत्वे समुखपराङ्मुखोत्तानाधोमुखत्वप्रत्वादिकं च यथायोगमुत्प्रेक्ष्य अभिनयविशेष कुर्यात् ॥९९-१००॥

भ्रमर दर्शयति मध्यमाङ्गुष्ठेति । सन्दशोऽग्रमयोग तदाकृतित्वाद्भ्रमरो हस्त ॥१०१-१०३॥

हंसवक्त्रमाह—तर्जनीमध्यमाङ्गुष्ठा इति । निरन्तरा इति विरलत्व निषे- धति ॥१०४॥

---

१. KSS, NS. लीलां रति रुचि।
२. NS, KSS. सन्तामार्गा।
३. NS. मण्डलकृते च KSS मण्डलकरेण ।
४. KSS वक्रे ।

तर्जन्यङ्गुष्ठसन्दंशस्त्व[1]रालस्य यथा भवेत् ।
आभुग्नतलमध्यस्थः स सन्दंश इति स्मृतः ॥११०॥

सन्दंशस्त्रिविधो [2]ज्ञेयो ह्यग्रजो मुखजस्तथा ।
तथा पार्श्वगतश्चैव रसभावोपबृंहितः ॥१११॥

पुष्पापचयग्रथने ग्रहणे तृणपर्णकेशसूत्राणाम् ।
[3]शल्यावयवग्रहणापकर्षणे चाग्रसन्दंशः ॥११२॥

वृन्तात् पुष्पोद्धरणं वर्तिशलाकाविपूरणं चैव ।
धिगिति च वचने रोषे[4] मुखसन्दंशस्य कर्माणि ॥११३॥

यज्ञोपवीतधारणवेधनगुणसूक्ष्मबाणलक्ष्येषु ।
[5]योगे ध्याने स्तोके संयुतकरणस्तु[6] कर्तव्यः ॥११४॥

पेशलकुत्साऽसूयासदोषवचने च वामहस्तेन ।
किञ्चिद् विवर्तितकराग्रः[7] प्रयुज्यते पार्श्वसन्दंशः ॥११५॥

आलेख्यनेत्ररञ्जनवितर्कवृन्तप्रवाल[8]रचने च ।
निष्पीडने तथालक्तकस्य कार्यं च नारीभिः ॥११६॥

---

मुक्तादीनां, यो गुणो धनुरादेस्तत्र संयुतकरणत्वं च न सदलेपणस्यैव, अपि तु हस्तद्वयव्यापारमात्रमेव । तच्च पार्श्वद्वयगतत्वेन उपर्युपरिभावेनोत्प्रेक्ष्यम् । पेशलमसारम् । प्रवालस्य रचनं गण्डतलबाहुशिखरादौ पत्रभङ्गकरणमित्यर्थः । यदि वा पल्लवस्यैव पत्रच्छेद्यालङ्कृतस्य ललाटादौ निवेशितस्य तत्रापसर्पणाभावमस्य हस्तस्य प्रयोगः. नारीभिरिति परिमितालक्तकपीडनमनेनेति दर्शयति ॥११०—११६॥

मुकुलमाह—समा नताग्रा इति । मुकुलाकारत्वान्मुकुलः । देवार्चनादि प्रारम्भे मुकुलव्यापारादेशे तु पद्मकोशवदिति पठता विटकस्य चुम्बनं इति केचित् । विटेति पाठः । स्वाभिप्रायमाविष्कर्तुं प्रमदासन्निधौ स्वहस्तमेव मुकुलितं विटश्चुम्बतीति

---

१. KSS, NS. सन्दंशो ह्यरालस्य
२. KSS. ज्ञेयो अग्रजो । GOS ज्ञेयो त्वग्रजो ।
३. KSS, शल्याकर्षग्रहणापकर्षणे ।
४. KSS रोषात् NS. रोषान् ।
५. KSS, योगेऽध्ययने ।
६ NS KSS. समुक्तकरस्तु ।
७. KSS. विवर्तितकराग्र ।
८. KSS रचनेषु ।

'समा गताग्रा सहिता यस्याङ्गुल्यो भवन्ति हि ।
ऊर्ध्वा हंसमुखस्येव स भवेन्मुकुलः करः ॥११७॥

देवार्च्चनबलिकरणे पद्मोत्पलकुमुदरूपणे चैव ।
विटचुम्बने च कार्यो विकुत्सिते विप्रकीर्णे च ॥११८॥

भोजनहिरण्यगणनामुखसंकोचप्रदानदानेषु ।
मुकुलितकुसुमेषु च तथा तज्ज्ञैरेव प्रयोक्तव्यः ॥११९॥

पद्मकोशस्य हस्तस्य' ह्यङ्गुल्यः कुञ्चिता यदा ।
ऊर्णनाभः स विज्ञेयः केशचौर्यग्रहादिषु' ॥१२०॥

शिरः कण्डूयने चैव कुष्ठव्याधिनिरूपणे ।
'सिंहव्याघ्रे'ष्वभिनयः' प्रस्तरग्रहणे तथा ॥१२१॥

---

विटचुम्बनम् । यदि वा विटैर्नारीणां कुचचिबुकादि स्थानेषु अङ्गुलिपञ्चकेन मम समन्द नखस्पर्शने कामसूत्रेऽध्यात्युरितवमिति तद्विटचुम्बनम् । हिरण्य कङ्कणद्वारे णामिनीयतेऽङ्गुलीयकादीनां तु मोचन । गणना पञ्चसङ्ख्या । तज्ज्ञैरित्युचितामिति-कर्तव्यतामनुसन्धायमति ॥११७-११९॥

ऊर्णनाभमाह—पद्मकोशस्येति । ऊर्णनाभिर्जालिकार. क्रिमिः । तस्य यतो मक्षिकादिग्रहणे ईदृक्करणाना सन्निवेशो भवत्यत स तथा । मत्वर्थीयोऽत्रप्रत्यय. केशानां चौर्येण ग्रहणं परदर्शनशङ्कया लाघवाद् ग्रह' । यत्र सिंहव्याघ्रादि स्वस्तिकेन विकृतक्षेत्रे गतेनाभिनयेत् । ते हि स्थिता स्वस्तिकेन आसने कररुहवन्तश्च । प्रस्तर पाषाण , निकषपाषाण इत्यर्थः । दर्भच्छटा इत्येके ॥१२०-१२१ ॥

ताम्रचूडमाह—मध्यमाङ्गुष्ठसंदंश इति । चूडामुखतकुक्कुटाकारतातामचूड' । तालैर्ध्वनि (ताल इति) देशमानो यथा वर्णवित्तासम्भवि सहिष्णु (?) इत्यादी । गर्जित बालादेराह्वानम् । अन्य तु लक्षणान्तरमस्य पठन्ति, "अङ्गुल्य सयुक्ता'

---

१ NS. KSS समागताग्रा ।

२ KSS , NS मुकुलः ।

३ KSS Omits हि ।

४ KSS ग्रहादिषु ।

५ KSS. व्याघ्राभिनय ।

मध्यमाङ्गुष्ठसन्दंशो वक्रा चैव प्रदेशिनी ।
शेषे तलस्थे कर्त्तव्ये ताम्रचूडकरेऽङ्गुली[1] ॥१२२॥

विच्युतश्च सशब्दश्च कार्यो निर्भर्त्सनार्थिषु ।
ताले विश्वसने चैव शीघ्रार्थे संज्ञितेषु च ॥१२३॥

तथा कलासु काष्ठासु निमेषे तु क्षणे तथा ।
एष एव करः कार्यो बालालापनिमन्त्रणे ॥१२४॥

अथवा यद्गुल्य सहिता यत्रा उपर्यङ्गुष्ठपीडिता ।
प्रसारिता कनिष्ठा च ताम्रचूडः करः[2] स्मृतः ॥१२५॥

शतं सहस्रं लक्षं च करेणैकेन योजयेत् ।
क्षिप्रमुक्ताङ्गुलीभिस्तु स्फुलिङ्गान् विप्रुषस्तथा ॥१२६॥

असंयुता करा ह्येते मया प्रोक्ता द्विजोत्तमाः ।
अतश्च संयुतान् हस्तान् गदतो मे निबोधत ॥१२७॥

पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः ।
देवतानां गुरूणां च मित्राणां चाभिवादने ॥१२८॥

---

इत्यादि । मुष्टिरेव प्रसारितकनिष्ठ इत्यर्थः । क्षिप्रं कृत्वा मुक्ताभिरङ्गुलीभिरिति ॥१२२-१२६॥

असंयुता इति । असंयुताभिनयादेव भवन्ति । तत्संयुता एव । नाप्यते एव कोहलादिभिरन्येषां दर्शनात् । अतश्चेति । एभ्य एवासंयुतेभ्यः अन्यस्त्वेषाद्ये संयुता उत्पद्यन्ते तान् स्वयं निबोधत मदीयं वचनमनादृत्योत्प्रेक्षध्वम् । तथा हि कूर्पराधीननिपतावेन पार्श्वे खटकामुखेन स्त्रीणाममभिनयः । खटकेन वामेन वर्णितमागच्छता च पिहितमुष्ट्या दक्षिणेन बाणमोक्षस्य । एतच्चित्राभिनये प्रतिज्ञाममित्याम इत्यास्तां तावत् । चत्वारिंशद्यानि च वक्ष्यमाणानि निबोधतेति सम्बन्धः ॥१२७॥

तेषामञ्जलिं तावल्लक्षयति पताकाभ्यामिति । अन्ययोः श्लेषेऽपि न नामान्तरम् । यथा सूचीमुखयोः संदंशादभिनयन्ते । अत्र तु नामान्तरमिति तुशब्दः । स्मृत इति इतोऽन्येऽपि "प्राञ्जलिः पुष्पकेतुः" (कुमार २-६३) इत्यादौ प्रसिद्ध इत्यर्थः सम्यग्ग्रहणेन समुखं सर्वासामङ्गुलीनामथ श्लेषो लक्ष्यते । उक्तमेव विनियोग

---

१. NS KSS ताम्रचूडे कराङ्गुली ।
२. GOS ताम्रचूडकर. ।

एष मदनाङ्गमर्दे सुप्तोत्थितविजृम्भणे बृहद्देहे[1]।
हनुधारणे[2] च योज्यः शङ्खग्रहणेऽर्थतत्त्वज्ञैः[3] ॥१३४॥

मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ।
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥१३५॥

स्वस्तिकविच्युतिकरणाद् दिशो घना[4] खं वनं समुद्राश्च।
ऋतवो मही तथौघं विस्तीर्णं चाभिनेयं स्यात् ॥१३६॥[5]

खटकः खटके न्यस्तः खटकावर्धमानकः[6]।
शृङ्गारार्थेषु योक्तव्यः प्रणामकरणे तथा ॥१३७॥

अन्ये—कुमुदोत्पलपद्मेषु कर्तव्यश्छत्रधारणे। इति ॥१३८॥

---

ऽन्योन्याभिमुखाङ्गुलि। एतदेवाह—अर्थेति—अभिनेयस्यार्थस्य यत्तत्त्वं परमार्थं। तद्धे जानन्त्यभिनयेऽनुसरणात् जानन्ति तं ॥१३३-१३४॥

अथ स्वस्तिकमाह—मणिबन्धनविन्यस्ताविति। यत्र शुद्धमेव स्वस्तिकपदमुपादीयते तत्रेदृश एव सन्निवेशः प्रदेशेषु मन्तव्य, यथा—चित्राभिनयादावर्थप्रकरणादिवशात्स्वन्यथापि प्रवर्तेत। यथा—स्वस्तिकविच्युतिकरणादित्यादौ (८-१०) पताकयोगेऽपि तथापि मणिबन्धनविन्यस्तत्व मात्रमनुयास्येव रूपम्। अत एव केचिदेतावतास्य लक्षणं परिशिष्टं तूदाहरणविषयमिति प्रतिपन्नाः। स्त्रीप्रयोजिताविति। पताकस्वस्तिककर्माणि स्त्रीभिरनुनैव कार्याणीत्यर्थः। स्वस्तिकार्थलक्षणसमाकृतित्वात्स्वस्तिकः ॥१३५-१३६॥

खटकावर्धमानकमाह—खटक इति। न्यस्यते। अन्ये स्वन्योन्याभिमुखं खटकद्वयमस्य रूपमित्याहुः। खटकस्य आ समन्तात् बहिरन्तर्योगादिदं नाम। शृङ्गारार्थेषु शृङ्गारप्रयोजनेषु ताम्बूलग्रहणादिषु। तथा हि वक्ष्यते—

खटकावर्धमानौ तु कृत्वा विटगतिं व्रजेत् इति। (अ १२-११०) तथेति प्रयोजन एव प्रायेणेश्वरीप्रसादनादौ प्रणाम इत्यर्थः।

"कुमुदोत्पलकुन्देषु कर्तव्यः शङ्खधारणे" इति वा पाठः ॥१३७-१३८॥

---

१. KSS विजृम्भणे बृहद्देहे।
२ NS अनुधारणे।
३. KSS शङ्खग्रहणे च तत्त्वज्ञैः।
४ KSS घना।
५. NS, KSS तथान्यद्‌' चाभिनेया।
६. NS, KSS. कटको वर्धमानकः।

अरालौ तु विपर्यस्तावुत्तानौ वर्धमानकौ[1]।
उत्तानाविति विज्ञेय स्पर्शस्य ग्रहणे करः ॥१३९॥
[3]सनिष्पेषकृते चैव रोषामर्षकृतेऽपि च।
निष्पीडित पुनश्चैव स्त्रीणाम् पर्याकृते भवेत् ॥१४०॥

मुकुल तु यदा हस्त कपित्थ परिवेष्टयेत्।
स मन्तव्यस्तदा हस्तो निषधो नाम नामतः ॥१४१॥

सग्रहपरिग्रहौ धारण च समयश्च सत्यवचन च।
सङ्क्षेप सक्षिप्त निपीडितेनाभिनेतव्यम् ॥१४२॥

शिखरस्तु यदा हस्तो मुगजोर्वेण पीडित।
निषधो नाम विज्ञेय स भयार्ते विधीयते ॥१४३॥

गृहीत्वा वामहस्तेन कूर्पराभ्यन्तरे भुजम्।
दक्षिण चापि वामस्य कूर्पराभ्यन्तरे न्यसेत् ॥१४४॥

स चापि दक्षिणो हस्त सम्यङ् मुष्टीकृतो भवेत्।
इत्येष निषधो हस्त कर्म चास्य निबोधत ॥१४५॥

एतेन धैर्यमदगर्वसौष्ठवोत्सुक्यविक्रमाटोपा।
[2]भिमानावष्टम्भ स्तम्भस्थैर्यादय कार्याः ॥१४६॥

---

उत्सङ्गमाह—अरालौ त्विति। विपर्यस्ताविति स्वस्तिकरूपौ। उत्तानाविति स्वसम्मुखौ, वर्धमानकाविति विनतौ तत्र दक्षिणो वामस्कन्धक्षेत्र इति यावत् अत एव च प्रकोष्ठस्वस्तिकत्व लक्ष्यते। स्वस्तिक एव दक्षिणपार्श्वस्थ इति विपर्यस्तत्वमिति केचित्। अधोमुखत्वमित्यन्य। स्वस्तिकाकारौ त्पूरौ कृत्वा स्वक्षेत्रात् प्रवेशमुखताद्वाह्यौऽङ्गुल्यौ यदा भवन्ति पृष्ठ च हस्तयोर्बहिर्मुख तदा विपर्यस्तत्वमिति तु युक्ततरम्। उत्सङ्गग्रहणयोग्यत्वकरणादुत्सङ्ग। स्पर्शस्य रागोक्षस्य ग्रहणेऽभिनये। निष्पेष पीडनम्, तेन सह यद्यत्क्रियते अतिप्रयत्नेन साध्य इत्यर्थ। रोषकरणे यथा—एषोऽस्मि ते दृढनिपीडनबाहुयन्त्रे त्यादौ। अमर्षकरणे यथा—विदूषकादेरीर्ष्याकरणे प्रसादनाङ्गीकरणे पर्यायात्मनुप्रक्षेपात्। सिंहावलोकित इत्यन्ये पठन्ति। एतानि कर्माणि पर्ष्ठानि व्याचक्षते ॥१३९-१४०॥

निषधमाह—मुकुलन्त्विति। कपित्थहस्तेन परिवेष्टयमानमुकुल तदभ्यन्तरे निषण्ण धत्ते इत्यतोऽस्य निषध। सङ्ग्रह सम्यग्ग्रहण धाम्न्यार्थवि, परिग्रह.

---

१ KSS वर्धमानतौ।
२ NS कार्य सिंहावलोकित।
३. NS KSS सनिष्पेषक ।

अथवा—

> ज्ञेयो मे निपक्षौ नाम हंसपक्षौ पराङ्मुखौ ।
> जालवातापनादीनां प्रयोक्तव्योऽभिघट्टने ॥१४७॥
>
> अंसौ प्रशिथिलौ मुक्तौ पताकौ तु प्रलम्बितौ ।
> यदा भवेतां करणे स दोल इति संज्ञितः ॥१४८॥
>
> सम्भ्रमविषादमूर्छितमदाभिघाते तथैव चाऽऽवेगे ।
> व्याधिप्लुते च [1]शस्त्रक्षते च कार्योऽभिनययोगः ॥१४९॥
>
> यस्तु सर्पशिराः प्रोक्तस्तस्याङ्गुलिनिरन्तरः ।
> द्वितीयः पार्श्वसंश्लिष्टः [2] स तु पुष्पपुटः स्मृतः ॥१५०॥
>
> [3]धान्यफलपुष्पसदृशान्यनेन नानाविधानि युक्तानि ।
> ग्राह्याण्युपनेयानि च सोपानयनापनयने च ॥१५१॥

---

स्वीकार धारणमत्यजनम्, समयो नियम सत्यवचन तथ्यमिति, मह् क्षेपस्तात्पर्यम्, समस्तमनेनैव सक्षिप्यमाणमपि । संक्षिप्ताभिनयेन हि तद्गति द्रव्येऽभिनय इत्युक्तम् संक्षिप्त सम्यक् क्षिप्त क्वचित्स्थापितमित्यर्थं ॥१४१-१४७॥

दोल लक्षयति असाविति । हस्तयो प्रकर्षेण लम्बमानत्वादेव स्कन्धयोः शैथिल्यमदृढत्व भवति । पताकाङ्गुलीनामवष्टम्भातामुदारणाय वा करणक्रियायाम- ङ्गुलिशैथिल्यलक्षणाया सत्यामित्यर्थः । दोलाकारत्वेन दोला । अभिनयव्यापारे योगो यस्य स तथाविधोऽत्र हस्त । कार्यं इत्यनेन तत्र तत्राभिनेये पार्श्वात्पार्श्वान्तर- गमन निपतन स्पन्दत्वमित्यादिना तावदितिकर्तव्यता सूचयति । अभिघोऽन्यादि- व्यसनजो दोष अभिघात ॥१४८-१४९॥

पुष्पपुटमाह— यस्तु सर्पशिरा इति । अङ्गुलि स्थाने निरन्तर बाढमपि सम्भु- यत्व मागुरित्याह पार्श्वेति । द्वितीय इति सर्पशिर हस्त । हस्तपुटेनेदृशेन पुष्प- ग्रहणमिति पुष्पपुट इत्य ॥१५०-१५१॥

---

१. KSS शस्त्रक्षतं ।

२. KSS सुश्लिष्ट. ।

३ KSS. धान्यजलपुष्पभक्ष्याण्यनेनवनानाविधानि ।

पताकौ तु यदा 'हस्तावूर्ध्वाङ्गुष्ठावधोमुखौ ।
उपर्युपरि विन्यस्तौ तदा स मकरः करः ॥१५२॥

सिंहव्यालद्विपिप्रदर्शने' नक्रमकरमत्स्यानाम ।
ये चान्ये क्रव्यादा ह्यभिनेयास्तेऽर्थयोगेन' ॥१५३॥

'कूर्परांसोञ्चितौ हस्तौ यदाऽऽस्तां सर्पशीर्षकौ ।
गजदन्तः स' विज्ञेयः कर्म चास्य निबोधत ॥१५४॥

एष च वधूवराणामुद्वाहे चातिभारयोगे च ।
'स्तम्भग्रहणे च तथा शैलशिलोत्पाटने चैव ॥१५५॥

शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाञ्चितौ ।
शनैरधोमुखाविद्धौ सोऽवहित्थ इति स्मृतः ॥१५६॥

दौर्बल्ये निःश्वसिते गात्राणां दर्शने तनुत्वे च ।
उत्कण्ठिते च तज्ज्ञैरभिनयप्रयोगस्तु कर्तव्यः ॥१५७॥

---

मकरमाह—पताकाविति । अङ्गुष्ठयोर्मकरकर्णद्वयवदवस्थानान्मकरः । द्वीपिनो व्याघ्रभेदाः । मत्स्यानामिति प्रदर्शनमिति सम्बन्धः । अर्थयोगेनेति अग्रपार्श्वादिषु हिंसनचलनादिनानार्थयोगप्रयोज्य इत्यर्थः ॥१५२-१५३॥

गजदन्तमाह - कूर्परांसोञ्चिताविति । कूर्परांसशब्देनोभयसामीप्यं तयोरन्तराल मुच्यते पूर्वदक्षिणे तु यथा तत्र कुञ्चितौ तस्याग्रवेष्टनपरौ । तद्यथा वामे बाहौ दक्षिणो, दक्षिणे वामो हस्त स्तम्भाकारवेष्टितदन्ताकृतियोगाद्गजदन्तः । वधूना वराणां च विवाहस्थानानयने शिलोत्पाटने गमागमनाय मन्तव्यम् ॥१५४-१५५॥

अवहित्थकमाह—शुकतुण्डाविति । अभिमुखौ पूर्वोन्नताञ्चितौ वर्तनया अधोमुखौ मन्ताकाविद्धावपोगयितौ । अवहित्थमुत्कण्ठादवहित्थ । एष हि कुर्वन्नात्मनात्मीयं यो पिनष्टि ॥१५६-१५७॥

---

१. KSS हस्तौ मूर्ध्ना ।
२. KSS द्विपदर्शने ।
३. KSS अभिनेयास्तेषु हस्तेन ।
४. KSS, NS कर्पूरांसाञ्चितौ ।
५. KSS स विज्ञेय ।
६. KSS स्तम्भे ग्रहणे ।

[1]मुकुलस्तु यदा हस्तः कपित्थपरिवेष्टितः ।
वर्धमानः स विज्ञेयः कर्म चास्य निबोधत ॥१५८॥

संङ्ग्रहपरिग्रहौ धारणं च समयश्च सत्यवचनं च ।
संक्षेपतस्तु सक्षिप्त नियोजितेनाभिनेतव्यम् ॥१५९॥

[2]ज्ञेयौ वै वर्धमानस्तु हंसपक्षौ पराङ्मुखौ ।
जालवातायनादीनां प्रयोक्तव्यौ विघाटने ॥१६०॥

[3]उक्ता ह्येते द्विविधा हस्तयुता अयुताश्च संक्षेपात् ।
[4]अभिनयकरास्तु ये त्विह [5]तेऽन्यत्राप्यर्थतः साध्याः ॥१६१॥

आकृत्या चेष्टया चिह्नैर्जात्या विज्ञाय तत्पुनः ।
स्वयं [6]वितर्क्य कर्तव्यं हस्ताभिनयनं बुधैः ॥१६२॥

नास्ति कश्चिदहस्तस्तु [7]नाट्येऽर्थोऽभिनयं प्रति ।
यस्य यद् दृश्यते[8] रूपं बहुशस्तन्मयोदितम् ॥१६३॥

---

वर्धमानमाह—ज्ञेयो वै वर्धमानश्च हंसपक्षौ पराङ्मुखाविति । अन्योन्यं स्वस्तिकवदवस्थितौ लक्ष्ये तु अन्योन्यनिरस्तौ दृश्येते । स्वस्तिकताहानाधीन केवल पराङ्मुखौ परस्परचलनेन विस्तारयोगाद्वर्धमानत्वम् । आदिशब्देन वक्ष.कवाटादि ॥१५८-१५९॥

उपसंहरन् सूचयति उक्ता ह्येत इति । यस्मादेते उक्ताः संक्षेपमाश्रित्याभिनेयविषये निरूपिताः । तुरिति तस्मादन्यत्राप्युक्तात् अभिनेयात् अर्थादर्थान्तरेऽपि अर्थतोऽभिनयत साध्य तापमिनु शक्यास्त्वादृश्च । (तुहेतौ, यस्मादाभिमुख्यतया, नार्थमने करोति स्वदृष्टार्थमर्पयेत.) ॥१६०-१६१॥

एवमभिनयमभिधायाभिनयान्तरमप्यस्तीति दर्शयति नास्ति कश्चिदिति नाट्यमिह तदुपयोगिनो विभावादयः । अत्र हेतुः यस्य यद्दृश्यत इति ॥१६२॥

एवमुक्तानामेवाभिनयानां साङ्कर्येण प्रयोगमनुज्ञायानुक्तमपि सङ्ग्रहीतुमाह अन्ये चापीति । अर्थोऽभिनयसामर्थ्यं शोभातिशयः । छन्दत इति नाट्याचार्य-

---

१. KSS., NS. विज्ञेयो ।
२. KSS, GOS does not read.
३. NS उक्तास्त्वेते ।
४. NS. अभिनयकरा ये ।
५. KSS ते ह्यन्यत्राप्यर्थत ।
६. KSS वितर्क्य ।
७. KSS. नाट्यार्थोऽपि ..NS नाट्याभिनयन ।
८. NS. मद्दृश्यते ।

अन्ये 'चाप्यर्थसंयुक्ता लौकिका ये करास्त्विह ।
छन्दतस्ते नियोक्तव्या रसभावविचेष्टितं ॥१६४॥

देशं कालं प्रयोगं चाप्यर्थयुक्तिमवेक्ष्य च ।
हस्ता ह्येते प्रयोक्तव्या 'नृणां स्त्रीणां विशेषत ॥१६५॥

सर्वेषामेव हस्तानां यानि कर्माणि सन्ति हि ।
तान्यहं संप्रवक्ष्यामि रसभावकृतानि तु ॥१६६॥

उत्कर्षण विकर्षण तथा चैवापकर्षणम्' ।
परिग्रहो निग्रहश्चाह्वान नोदनमेव च ॥१६७॥

सश्लेषश्च वियोगश्च रक्षण मोक्षण तथा ।
विक्षेपधूनने चैव 'विसर्गस्तर्जन तथा ॥१६८॥

छेदन भेदन चैव स्फोटन मोटन तथा ।
ताडनं चेति विज्ञेय तज्ज्ञं कर्म करान् प्रति ॥१६९॥

'उत्तान पार्श्वगश्चैव तथाऽधोमुख एव च ।
हस्तप्रचारस्त्रिविधो नाट्यतस्त्वसमाश्रय ॥१७०॥

---

कथाप्रवाहानुसारीत्यर्थ । रसा स्थायिन । भावा : सञ्चारिण. तत्सूचकानि यानि विचित्राणि सात्त्विकोपाङ्गानि तै सह । एव लोकधर्मीप्रदर्शने प्रसिद्धोदाहरणमात्रमभिनेयानां परिगणनमित्याख्येयम् ॥१६४॥ देश क्षेत्रविशेष । प्रयोग. सुकुमारोद्धतरूपकविशेष । अर्थस्य युक्तिरुपपत्ति मुख्यगौणलाक्षणिकव्यङ्ग्यादिभेदेन । अवेक्ष्येति विचार्येत्यर्थ । प्रयोक्तव्या इति भव्यार्थे कृत्य । विशेषत इति । पुरुषाणां तदपेक्षया सामान्या आचारा भवन्ति। अत एवोत्तमानामतिस्वल्पप्रचारो हस्ताभिनय ॥१६५॥ रसाभावकृतानीति । स्थायिसञ्चारिभेदेन तत्तद्विभावभेदवशादित्यर्थ । तथा हि, केशानां विदूषक प्रत्याकर्षण सटकामुखेन, प्रिया प्रत्यरालेन, क्रीडायां कलहे च मुष्टिनेत्याद्युत्प्रेक्ष्यम् ॥१६६॥ ऊर्ध्वाधोदूरगमनादन्यथाकरणमुत्कर्षणादि । परिग्रहो मण्डलेन ग्रहणम् । निग्रहो विनाशन, तोदन प्रेरण ताडनमाहनन विक्षेप सावज्ञं त्याग धूननं कम्पनम् । विसर्ग सादर त्याग, स्फोटन विकासन, मोटन सङ्कोचन इति प्रकारे । एव प्रकारेण अन्येऽपि । रसभावकृतानीति तदुक्त तत्स्पष्टयितुमाह

---

१. KSS च अर्थे ।
२. KSS. स्त्रीणां नृणां ।
३. KSS. चैवापकर्षणम् ।
४. KSS विसर्गस्तदनन्तरम् ।
५ KSS NS मोहन ।
६ NS KSS do not read this verse

सर्वे हस्तप्रचाराश्च प्रयोगेषु यथाविधिः ।
नेत्रभ्रूमुखरागैश्च[1] सुसंयुक्ता व्यञ्जिता बुधैः ॥१७१॥
करणं कर्म स्थानं [2]प्रचारयुक्तिं क्रियां च संप्रेक्ष्य ।
हस्ताभिनयस्तज्ज्ञैः कार्यो[3] लोकोपचारेण ॥१७२॥
उत्तमानां करा कार्या ललाटक्षेत्रचारिणः ।
वक्षःस्थाश्चैव मध्यानामधमानामधोगताः ॥१७३॥

---

सर्वे नेत्रभ्रूमुखरागाद्यैर्व्यञ्जिता कार्या इति । प्रचार उद्वर्तोद्वर्तनपार्श्वाधोमुखादिः । परोक्षाभिनयने दृष्टचादयो हस्तानामनुगता । प्रत्यक्षे तु विपर्यय ॥१६७-१७१॥

एतत्सर्वमुपसंहरति करणमिति । करणमावेष्टितादि, कर्म विक्षेप, स्थानं ललाटादिक्षेत्र उत्तानादिसन्निवेशस्थितिश्च, प्रचार स्वल्पादि युक्तिर्मुख्यगौणाद्युपपत्ति, न हि गौरयं श्राह्मण इत्यत्र मृगाक्षी हरिणाभिनयेन कर्तरीमुखमृगशीर्षक प्रायेणाभिनीयते । अपि तु सौन्दर्याभिनये, चतुरशुकतुण्डशिखरनियमप्रायेण । युक्तिश्च विशेषणविशेष्यभावादिविचार । यथा तद्गुणसंविज्ञाने बहुव्रीहौ वृत्तिपदार्थान्यपदार्थौ अभिनेयौ, सपुलकस्वेदोद्गमोत्कम्पयेति (रत्ना १-१) । उपलक्षणविभक्ते त्वन्यपदार्थमात्र, तत्राप्युपलक्षणतात्पर्ये वृत्तिपदार्थोऽप्यभिनेय । स त्वनादेश इति तूपाध्यायाः । क्रिया त्रिधा विधिनिषेधानुभयरूपा । गच्छ मा गच्छेत्यादौ विधौ हि प्रत्ययार्थस्यैव, निषेधे धात्वर्थस्यैव, अनुभयरूपे प्रकृत्यर्थस्यैव । अवतारयत्यायं इत्यादौ तु न विधि, अपि तु प्रकृत्यर्थमात्र प्रदर्शयितव्यम् । लोटा तु स्वाभिप्रायमात्र प्रकाश्यमानमप्रधानमिति प्रकृत्यर्थ एवाभिनेय. । अत्र व्यापक हेतुमाह लोकोपचारेणेति ॥१७२॥

करणं कर्मैष्वेव स्थानमुक्तम् । तद्विभजत्युत्तमानामिति । उत्तमे भुवर्णादिरूपे सन्निकृष्टाः । मध्यमे मध्यमा । अधमे विप्रकृष्टा. । ललाटादिशब्दानामुपलक्षणार्थत्वादिति केचित् । एतेषु क्षेत्रेषु वर्तनाविक्षेपपूर्वकमुत्तमादयो राजामात्यविदूषकादयोऽभिनयान् यथोचित एवाभिनयस्थाने कुर्युरित्यनेनोत्तमा देवतागुरुनृपाश्रयो यदा निर्दिश्यन्ते तदा ललाटक्षेत्रचारिभि अञ्जल्यादिहस्तै, मध्यमास्तु चतुरादिभिर्वक्षःक्षेत्रचरै, अधमा शुकतुण्डादिरध क्षेत्रचरै । तेन चन्द्रतारादिदर्शनेऽधमस्यापि ललाटक्षेत्रचरा हस्ता इत्यादि न विरुद्धमिति । इद च युक्ततरमित्युपाध्याया —ये चतुरारामादि मत्यानुगताम्भोर्यलोग्योर्यादिविरुद्धविषया एवतास्तेषां विमर्शार्थमिदं वचनम् । ये चाग्न्यादय उत्तमा यथास्तेषामभिनये ललाटक्षेत्रगत्वमित्यादिक्रमेण ॥१७३॥

---

१. KSS. रागैश्च ।
२. NS , KSS प्रकारयुक्ति ।
३. GOS कार्यस्तज्ज्ञैः ।

ज्येष्ठे स्वल्पप्रचारा स्युर्मध्ये मध्यविचारिण[1] ।
अधमेषु प्रकीर्णाश्च हस्ता. कार्या प्रयोक्तृभि ॥१७४॥
लक्षणव्यञ्जिता हस्ताः कार्यास्तूत्तममध्यमे. ।
लोकक्रियास्वभावेन नीचेष्वर्थवशाश्रया ॥१७५॥ 

अभिनयगत विशेषान्तरमप्याह ज्येष्ठे स्वल्पप्रचारा स्युरित्यादि । प्रयोगे ज्येष्ठे नाटकादौ चतुर्वर्गोपायोपदर्शिनि प्रत्यक्षनाप्राधान्यादल्पो हस्ताभिनयो, मध्यमे तु रञ्जनाफले भाणकादौ मध्यम प्रत्यक्षे हि नथाकालभाषितप्राधान्यात् । अधमे तु नृत्तकाव्ये चिन्दुकादौ च प्रकीर्ण इति केचित् । एतदव्यवस्थितत्वादयुक्तम् । नाटकेऽपि भूयस्त्वमस्य । परस्परपर्याभिनेयत्वे उत्तमपात्रेण तु प्रधान एवाभिनय कार्यो न विशेषणम्, अस्मिन्नाट्ये गृहीतविशेषणा विशेष्यधर्मेति मन्यमाना एतदमृष्यन्तोऽन्ये त्वाहुः—यत्र पदार्थसमुदायो ह्येकेनाभिनयेन वाक्यप्रतिपत्तिरनेकेन वा चलत्वात् । तद्यथा – "या स्रष्टुः सृष्टिराद्या" (शाकु १-१) इत्यत्र । तत्रैक एव जगद्गुताशना-भिनय उत्तमेन प्रयोज्य । अधमेन त्वनेकश्च चलस्वभावत्वात् । मध्यमेन मध्यम इति प्रचारो वर्तना योत्तमेऽप्येति वा । एतत्तु श्रोत्राविच्युतिवाचित्वात्, 'अथ नयन-समुत्थ" (रघु २-७५) इत्यादौ प्रयत्नोपहतस्य पदार्थे वाक्यरचनमित्यस्य प्रोक्तस्य-स्याभिनये नानुसरणप्रसङ्गान्नाद्रियते । ये परिमितमभिनेय गमयन्ति ते स्फुटमेवा-र्थस्य गमका । अर्थप्रकरणादेस्तत्र मुख्येन सहायत्वात् अनन्तार्थजातव्यवच्छेद-करत्व हि क्लेश । तादृशा उत्तमप्रकृतिषु हस्ता । अधमास्तु यथावचन दिनादमाहु-स्तथा प्रकीर्णभूयस्त्वमभिनेये मन्दिहानस्याभिनयायत्तमुत्कर्षेण विरचनमित्यादि—एव केचित् । अपरे त्वाहु प्रचारस्त्रिधा तत्त्वधा च वक्ष्यते नयोगमस्त्र च पल्लवादेकरस एवोत्तानादिक प्रचार, अधमस्य त्वनियतोऽपि इति । तदन्त्वत्र युक्ततमम्—ज्येष्ठेऽभिनये प्रत्यक्षवर्णनयानात्मप्रत्यक्षविषये हस्तव्यापारोऽल्प । 'ग्रीवाभ समरमस ' (शाकु १-७) इत्यादौ । तथा "तन्वी मेघजलार्द्रपल्लवतया" (विक ४२८) इत्यादौ । अत्र हि सात्त्विकभूयस्त्वात् ज्येष्ठत्वम् । अप्रत्यक्षनायिकानुभवरूपकल्पे तु सात्त्विकावकाशाभावोऽनावेशादिति तत्राधमोऽभिनय, सत्त्वहीनोऽधम स्मृत (२२-२) इति वचनात् । तत्र विप्रकीर्णा विक्षिप्ता बहुलतमा हस्ता । यथा कुञ्जरकसुन्दरकादीना परस्परवृत्तयुद्धवर्णने । एतद्द्वयातिरिक्ते तु मध्यमो हस्तप्रयोग' । यथा विदूषकेण प्रत्यक्ष दृश्यमाने नानावस्थावैचित्र्यशालिनि उद्यानादिवर्णने ॥१७४॥

लक्षण सौष्ठव लक्ष्यते । सौष्ठव लक्षण प्रोक्त वर्तनात्रयसमाश्रितम् । (१०-१७) इति तदीना अधमानाम् ॥१७५॥

लक्षणव्यञ्जिता इत्यादि । अन्येत्वाहु —यादृश्यो लक्षणमुक्त ततोऽन्यथाऽपि पूर्णसंश्लिष्टा-कृतयोऽभिनयार्था नाना श्लिष्टधर्मोच्चारणादिति । निचेष्विति नयनयुगपदादिव्यापारे

[1] GOS, मध्ये कुर्यात् मध्यमे ।

अथवान्यादृशं प्राप्य प्रयोगं कालमेव च ।
विपरीताश्रया हस्ता प्रयोक्तव्या बुधैर्न वा ॥१७६॥

विषण्णे मूर्च्छिते भीते[1] जुगुप्साशोकपीडिते ।
ग्लाने [2]स्वप्ने विहस्ते च निश्चेष्टे तन्द्रिते जडे ॥१७७॥

व्याधिग्रस्ते जरार्ते च भयार्ते शीतविप्लुते ।
मत्ते प्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते ॥१७८॥

हिमवर्षहते बद्धे वारिणाप्लवसंश्रिते ।
स्वप्नायिते च संभ्रान्ते नखसंस्फोटने तथा ॥१७९॥

न हस्ताभिनयः कार्यः कार्यः सत्त्वस्य संग्रह[3] ।
[4]तथा काकुविशेषश्च [5]नानाभावरसाश्रितः ॥१८०॥

[6]यत्र व्यग्रावुभौ हस्तौ तत्र दृष्टिविलोकनैः[7] ।
वाचिकाभिनयं कुर्याद्विरामैरर्थदर्शकैः ॥१८१॥

---

शीतकालादियोगे च सौष्ठवमस्फुटाङ्गमिव, अवहित्थादौ चासौष्ठवयोगेऽपि सौष्ठवमित्यादि वैपरीत्यम् ॥१७६॥ विहस्तो हस्तवैकल्यापन्न, मत्तो मद्येन, प्रमत्त प्रमादात्, उन्मत्तोऽपस्मारी ॥१७७-१७९॥ किं सर्व एवात्र हस्ताभिनय इत्याशङ्क्य प्रतिप्रसवार्थमाह कार्य इति । ये हस्ता आन्तरीं चित्तवृत्तिं सूचयन्ति । कपोतक इव भयं, कर्कटक इव मदनविजृम्भा, दोल इव शोकं, शुकतुण्ड इवेर्ष्या ते कार्या एव, सात्त्विकवदनुभावस्य भावव्याप्तेषा सात्त्विकश्च कार्य एवेत्यावृत्त्या । ये तु बाह्यद्रव्यगुणादिगमकास्ते न कर्तव्या इति ॥१८०॥ यत्र तु सर्व एव न कर्तव्यास्तं विषयमाह यत्र व्यग्राविति । यथा सारथेः प्रतोदरश्मिव्यग्रहस्ततायाम् । विलोकनैरिति विलोक्यते चित्तवृत्तिरेभिरिति मुखरागादि, कुर्यादिति स्फुटयेदित्यर्थः । अर्थदर्शकैरिति अनुवृत्तिलक्षणोऽरोधकृतैरित्यर्थः ॥१८१॥

हस्तानां दिग्भेदावस्थानकृत प्रचारमाह—उत्तान इत्यादि । यथा 'विरचित-मुखीसस्य' मित्यभिनये (६२२) पताक । यथा वा जिह्वाभिनये आस्यस्थेऽधोऽग्र-

---

१. GOS ह्रीते ।
२. KSS, NS सुप्ते ।
३. GOS NS सत्त्वसमाश्रयः ।
४. NS., KSS तथाकार ।
५. GOS, नानार्थरस ।
६. KSS, NS. यथा ।
७. KSS, तत्र दृष्टिविलोकितैः । NS तत्र दृष्टिविलोकनैः ।

उत्तानः पार्श्वगश्चैव तथाऽधोमुख एव च ।
प्रचारस्त्रिविधोऽङ्गानां नाट्यनृत्तसमाश्रयः ॥१८२॥
[1]उत्तानो वर्तुलस्त्र्यश्रः स्थितोऽधोमुख एव च ।
पञ्च प्रकारा हस्तस्य नाट्यनृत्तसमाश्रया ॥१८३॥
[2]एव ज्ञेयाः करा ह्येते नानाभिनयसंश्रिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि हस्तान् नृत्तसमाश्रयान् ॥१८४॥

---

त्रिपताकः । पार्श्वगो यथा धनुरभिनये मुष्टिः । अधोमुखो यथा समुद्राभिनये ललाटदेशेऽग्रे स्वस्तिकपताकः । यथा "सवृन्तविवृत पाल्यमिदमत्र त्रिपताकः" उत्तानोऽधस्तलस्त्र्यश्रोऽग्रगोऽधोमुख एव च । पञ्च प्रकारा हस्तस्येति भट्टोद्भट पठति । तत्राधस्तलेऽधोमुखोऽन्तर्भूत । उत्तानेऽग्रग त्र्यश्रः त्रिपार्श्वग एव । अत्रापि तु समविषमत्र्यश्रादिनावान्तरभेद उत्तानादेर्भवति । इत्थं त्रैविध्यमेव युक्तम् तत्र रसनिष्पादनमभिनयस्य वस्तित्युक्त नत्र करणमनुभावात्मकं, तत्राङ्गहारा करण-सम्पदा । करणस्य च लक्षणमुक्तम् "यानि स्थानानि याश्चार्यो नृत्तहस्ता." (४-५६) इत्यादि । तत्र स्थानकषायं स्थलेन (अ-१३) लक्षयिष्यन्ते ॥१८१-१८२॥

हस्तप्रसङ्गान्नृत्तहस्ता वक्तव्या । किञ्चाभिनयकृताप्येषा क्वचिद्व्याप्तु यथा लताहस्तौ प्रतिपद्येते नृत्ताभिनयन प्रा (६-२००) यथा वा करिहस्तस्य हस्त्यभिनय-नम् । एवं चतुरश्रादीनामपि प्रयोगवशात् दृष्टव्यमित्याशयेनाह—अत ऊर्ध्वमिति । नृत्तस्य करणात्म स्थाश्रयाद्धेतुता । एभ्योऽभिनयहस्तेभ्य ऊर्ध्वमित्येतद्गणना पृष्टेऽभि-नयनहस्तत्वेनापि गणनायोग्यादित्यर्थः । तत्र चातुरश्र्यमूल नृत्तेऽङ्गस्य जीवितमिति तन्निमित्तभूतो चतुरश्रो तावदाह वक्षस इति । वक्षोऽभिवक्ष्य साऽष्टाङ्गुलो देश तत्रस्थो परस्पर स्वष्टाङ्गुलान्तरत्वात् प्रत्युत चातुरश्र्य भवतीत्युत्तरे इयेमेव । प्राङ्मुखा-विति यत्सम्मुख प्रयोक्ता यत्सम्मुखाविव, न तु प्रयोक्तृसम्मुखौ । कूर्परयोरनयोश्च तुलाधारणवत्समत्वमवश्यम् । अङ्गुलचातुरश्र्यदानाच्चतुरश्रौ । आस्यन्तविशेष एवाय-मभिनयोऽपि द्विवचनादपवादविहीनत्वे द्वयोरेव प्रयोग उत्पादनीयो हेतुर्हस्तान्तरस्य द्वितीयप्रकारयोगेऽपि केवलस्यैव चतुरश्रतापदेश एव, तुल्यरूपत्वाच्च न चतुष्पद्धिना-श्याहृतिरिति एव सर्वत्र ॥१८३-१८४॥

अथोद्वृत्तौ हस्तपक्षकृताविति । आदौ चतुरश्रो तत उद्वेष्टितवर्तनया हंसपक्ष कृत इति कृतशब्देनाह त्रिधिम् । एको विवर्तते उत्तान स तु, परस्त्वधोमुख

---

1 KSS reads it as—
उत्तानोऽधस्तलस्तिर्यगूर्ध्वाधोमुख एव च ।
हस्तप्रचारा विज्ञेया नाट्ये नृत्ते च पञ्चधा ॥
2 KSS does not read it.

'वक्षसोऽष्टाङ्गुलस्थौ तु प्राङ्मुखौ खटकामुखौ[2]।
समानकूर्परांसौ तु चतुरस्रौ प्रकीर्तितौ ॥१८५॥

हंसपक्षकृतौ हस्तौ व्यावृत्तौ तालवृन्तवत् ।
उद्वृत्ताविति विज्ञेयावथवा तालवृन्तकौ[3] ॥१८६॥

चतुरस्रस्थितौ हस्तौ हंसपक्षकृतौ तथा ।
तिर्यक्स्थितौ चाभिमुखौ ज्ञेयौ तलमुखाविति ॥१८७॥

तावेव मणिबन्धान्ते स्वस्तिकाकृतिसंस्थितौ ।
स्वस्तिकाविति विख्यातौ विच्युतौ विप्रकीर्णकौ ॥१८८॥

अलपल्लवसंस्थानावूर्ध्वास्यौ पद्मकोशकौ ।
अराल'खटकाख्यौ 'चाप्यरालखटकामुखौ[6] ॥१८९॥

---

मन्नावर्तौ कक्षास्थानगिन्ययं । एतदेवाह तालवृन्तवदिति । आवर्तनकाल ऊर्ध्वं वर्तमानत्वादुद्वृत्तौ । नामान्तरेण तालवृन्तविषयत्वमभिनेयस्य प्रोक्तं ॥ १८५॥

अथ तलमुखौ—चतुरस्रस्थिताविति । तथेति व्यावृत्तोद्वृत्तपूर्वकत्वमप्याह । तेन परिमण्डलिकान्ते स्वस्वपार्श्वस्थाङ्गौ व्यवस्थितौ हंसपक्षावेव । अन्योन्यसंमुखतलत्वात्तलमुखौ । "मद्दल महुरिजिम वज्जइ" (मर्दलं मधुरं वादयति) इत्यादिविषये चायमभिनयोऽपि ॥१८६॥

अथ स्वस्तिकौ विप्रकीर्णौ च तावेवेति । तलमुखावेवेत्यर्थः । अन्तःसर्पीण । स्वस्तिको नाम लक्षणविशेषः । विच्युताविति विशेषेण सहसा च्युतावित्यर्थः । एवं पूर्ववृत्तानन्तरसम्पुटस्यन्यतोपजातत्वं स्वस्तिकविप्रकीर्णयोः ॥१८७॥

अरालखटकामुखावाह—अलपल्लवसंस्थानाविति । स्वस्तिकवत्पताकौ कृत्वा अलपल्लवोपलक्षितया व्यावर्तितपरिवर्तनया पश्चिमवर्तनया तावेवोर्ध्वमुखौ पद्मकोशौ विधाय सततमेव नाभिनिर्गतपद्मकोशाग्रावर्तनया एकमरालं द्वितीयं खटकामुखं चानुगमनसंस्थानेन कुर्यात् । स्वस्तिकेनेति त्वपरे । अरालौ तत्र मध्यनिर्दिष्टे ॥१८८-१८९॥

अथाविद्धवक्रावाह—भुजांसकूर्पराग्रेरिति । वृत्तानुरोधादेव पठितम् । अथ स्वयं प्रसार्य कूर्पराग्राभ्यां भुजाग्राभ्यां च क्रमेणोपलक्षितं यत्कुटिलं सविलासं

---

१. KSS वक्षसो ।
२. KSS खटकामुखौ ।
३. KSS तालवृन्तवत् ।
४ KSS कटका ।
५. NS. चाप्य ।
६ KSS. खटकामुखौ ।

'तथैव मणिबन्धान्ते ह्यरालौ[1] विच्युतावुभौ ।
ज्ञेयौ प्रयोक्तृभिर्नित्यमराल कटकाविति ॥१६०॥

भुजांसकूर्परांसैस्तु कुटिलावर्तितौ करौ ।
पराङ्मुखतला[2]विद्धौ ज्ञेयावाविद्धवक्रकौ ॥१६१॥

हस्तौ तु सर्पशिरसौ [3]मध्यमाङ्गुष्ठकौ यदा ।
तिर्यक्प्रसारितास्यौ च तदा सूचीमुखौ स्मृतौ ॥१६२॥

[4]सर्पशीर्षौ[5] यदा हस्तौ भवेतां स्वस्तिकस्थितौ ।
मध्यप्रसारिताङ्गुष्ठौ ज्ञेयौ सूचीमुखौ तदा ॥१६३॥

रेचितौ चापि विज्ञेयौ हंसपक्षौ द्रुतभ्रमौ ।
प्रसारितोत्तानतलौ रेचिताविति [6]संज्ञितौ ॥१६४॥

---

(पताकौ) कृत्वा आवर्तनं व्यावर्तितकरणं कनिष्ठादि नयुक्तावाविद्धौ हस्तपारिणौ सन्तावधोमुखतलौ तदा भवतस्तयेद नाम ॥१६०॥

अथ सूचीमुखौ –हस्तौ तु सर्पशिरसाविति । चतुरश्रस्थानगौ सर्पशिरसौ मध्यमाङ्गुलिनिक्षिप्ताङ्गुष्ठौ हस्तौ यदा तिर्यक्प्रसारित पार्श्वगमनेन सह विनाशित मुख तर्जन्यग्रपरूप द्वयोस्तादृशौ बाहू (बहि ?) प्रसारणेन पर्याप्ता क्रियेते तदा सूचीमुखौ सूचीवद्बाहू (इहि ?) प्रसारणात् । अत्र तुशब्द पर्याय द्योतयति । सूचीमुखौ मध्यप्रसारिताङ्गुष्ठौ स्वस्तिकौ सर्पशीर्षकौ इत्येकेषां पाठ ॥१६१-१६२॥

अथ रेचितौ–अपरेचितौ चापीति । केचित् रेचितौ रेचिताविरयस्य पौन-रुक्त्यपरिजिहीर्षया द्वितीये लक्षणे इत्याहु तेन द्रुतौ भ्रान्ताविकृतावेव हंसपक्षौ रेचितौ तथा प्रसारितोत्तानतलत्वेन विकृतावपि रेचिताविति । अन्य वेदमेव पाठ-मित्याहु । रेचितौ मन्तौ यो द्रुतभ्रमौ तौ रेचितसंज्ञाविति न पौनरुक्त्यम् । सन्नर्य-वार्धरेचिते लब्धे पुनर्वचनमविशेषेण चातुरश्र्यस्य स्थितिं सूचयन् नृत्तहस्तान्तरेष्वपि-अङ्गपर्यायेण प्रयोग सूचयति ॥१६३-१६४॥

अथोत्तानावञ्चितौ – अञ्चिताविति । त्रिपताकौ हस्तावंसकपोलललाटानाम-न्यतमक्षेत्रे कृतौ अञ्चनक्रियया युक्तौ अन्योन्याभिमुखाग्रपरिस्थितौ, तथांसयो

---

१ KSS does not read it
२. NS ह्यराल।
३ KSS, NS तथा।
४. KSS, NS मध्यस्था।
५ KSS does not read this verse.
६ KSS, NS सस्थितौ।

चतुरस्रौ भवेद्वामः सव्यहस्तश्च रेचितः।
विज्ञेयौ नृत्ततन्त्रज्ञै'रर्धरेचितसंज्ञकौ ॥१९५॥
अञ्चितौ कूर्परांसौ तु त्रिपताकौ करौ कृतौ[2]।
किञ्चित्तिर्यग्गतावेतौ स्मृतावुत्तानवञ्चितौ ॥१९६॥
मणिबन्धनमुक्तौ तु पताकौ पल्लवौ स्मृतौ।
बाहुशीर्षाद्विनिष्क्रान्तौ[3] नितम्बाविति कीर्तितौ ॥१९७॥
केशदेशाद्विनिष्क्रान्तौ परिपार्श्वोत्थितौ[4] यदा।
विज्ञेयौ केशबन्धौ तु करावाचार्यसम्मतौ ॥१९८॥
तिर्यक्प्रसारितौ चैव पार्श्वसंस्थौ तथैव च।
लताख्यौ च करौ ज्ञेयौ नृत्ताभिनयनं प्रति ॥१९९॥
समुन्नतो लताहस्तः पार्श्वात्पार्श्वं विलोलितः।
त्रिपताकोऽपरः कर्णे करिहस्तः[5] प्रकीर्तितः ॥२००॥

---

कूर्परयोरंसयोश्च किञ्चिच्चलनं भवति। अञ्चनशब्द उत्तानत्वप्राप्ते पुनरप्यञ्चने-नोद्गमनक्रियायोगान्मृदुत्तानावञ्चितौ ॥१९५॥

अथ पल्लवौ—मणिबन्धनमुक्तौ त्विति। ऊर्ध्वव्यावर्तितकरणेन बाहू प्रसार्य परिवर्तितक्रियया स्वस्तिकाकृती पताकौ। पल्लवाकारत्वात् यथोक्तौ। शिथिलौ पल्लवावित्यन्ये पठन्ति। त्रिपताकावित्यनुवर्तयन्ति।

अथ नितम्बौ—बाहुशीर्षादिति। पताकाविति अनुवर्तते। स्कन्धप्रदेशाद्विनिष्क्रान्तत्वेनोत्तानत्वाधोमुखत्वपर्यायत्वेन निष्क्रान्तौ पताकौ, तस्मात् क्षेत्रस्याक्षेपात् नितम्बक्षेत्रे तथैव पर्यायेण वर्तमानौ नितम्बौ ॥१९६॥

अथ केशबन्धौ केशदेशादिति। आदौ पार्श्वक्षेत्रात् तत्पार्श्वपरिवर्तनपूर्वकमुत्थितौ शिरःक्षेत्रं प्राप्तौ, अत एव केशदेशान्नितम्बहस्तोक्तवदेव विक्षिप्तहस्तत्वेन निष्क्रान्तौ तथा तेनैव प्रकारेण पुनः केशदेश एव पर्यायशो गतागतत्वेन प्रत्यावर्तमानौ। केशसंबन्धात्केशबन्धौ। आचार्यसम्मतौ च शोभातिशयकरणात् ॥१९७॥

अथ लताहस्तौ—तिर्यक्प्रसारितौ चेति। पताकाविति वर्तते। अन्ये तु नितम्बादिषु त्रिपताकावित्यनुवर्तयन्ति लताहस्तान्तेषु ॥१९८॥

---

१. KSS अर्धरेचित।
२ KSS. NS., त्रिपताकाकृतौ करौ।
३. KSS शीर्षादिनिष्क्रान्तौ।
४. NSS NS. परिपार्श्वस्थितौ।
५. KSS करिहस्तौ।

कटिशीर्षनिविष्टाग्रौ[1] त्रिपताकौ यदा करौ।
पक्षवञ्चितकौ हस्तौ तदा ज्ञेयौ प्रयोक्तृभिः ॥२०१॥

तावेव तु परावृत्तौ पक्षप्रद्योतकौ स्मृतौ।
अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ ॥२०२॥

हंसपक्षकृतौ हस्तौ व्यावृत्तपरिवर्तितौ।
तथा प्रसारितभुजौ दण्डपक्षाविति स्मृतौ ॥२०३॥

ऊर्ध्वमण्डलिनौ हस्तावूर्ध्वदेशविवर्तनात्।
तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ ॥२०४॥

---

अथ करिहस्तः—समुन्नत इत्यादि। सदलेपक्रमेण य उन्नत। विलोलित इति दोलावन्नीत। अपरग्रहणात् त्रिपताक एव खटकामुखस्य इति केचित्। खटकामुखोऽपर इत्यन्ये पठन्ति। प्रख्यातीमतयानारम्भोऽस्य चतुरश्रवत्, विजातीयारम्भोऽपि नृत्ताभ्यासस्य व्यपदेशात् करालखटकामुखवत्। अतो न द्विवचनम्। एकैकस्य पृथक्प्रयोगे करिहस्तत्वाभावादित्येकवचनमेव। तदाकारत्वाच्चेद नाम ॥२०६॥

अथ पक्षवञ्चितौ पक्षप्रद्योतौ च—कटिशीर्षेति पाठः। वृतौ पक्षावञ्चितौ गतौ, तत्सम्मुखौ तु तद्द्योतयतीति तथोक्तौ। एवकारेणानुगं व्यामिश्रतया प्रयोगशोभा भवतीत्याह ॥२००-२०१॥

अथ गरुडपक्षौ अधोमुखेति। अधोमुखौ नितम्बक्षेत्रे भूत्वा तलेनाविद्धौ ऊर्ध्वगमनं झटिति कुर्वाणौ तार्क्ष्यभुजाकाराक्षेपात् तिलकवाक्यप्रमाणत्वात्सुकरण प्राप्त त्रिपताकबाधेन पताकावुपलभ्येते ॥२०२॥

अथ दण्डपक्षौ—हंसपक्षकृताविति। एकस्य हंसपक्षस्य व्यावर्तने विलासेन पार्श्वादिक्षेत्रस्थ निकटस्य वर्तनं तत्समकालमेव द्वितीयस्य स्वदेहपरिवर्तनेन वर्तनं भुजप्रसारणपर्यन्तं पुनरपरेणाङ्गेनेति द्वावपि प्रसारितभुजौ व्यावर्तितपरिवर्तितौ च भवत इति पक्षे पार्श्वतो दण्डवद्भुज इति दण्डपक्षौ। युगपदेव द्वयोरपि प्रसारनव्यावर्तनपरिवर्तने तु क्रमेणेत्यन्ये ॥२०३॥

अथोर्ध्वमण्डलौ ऊर्ध्वमण्डलिनाविति। वक्षोदेशाद् व्यावर्तितकरणेन ललाटक्षेत्रेण पार्श्वगमने विधाय ततोऽपि मण्डवद् भ्रमणेन प्रसारितावूर्ध्वमण्डलिनौ। प्रसारितभुजाविति अनुवर्तते। ललाटप्राप्तिपर्यन्तेनैवानयोर्लक्षणं शिष्टं तु पार्श्वमण्डलिनोरिति केचित्। तावेव पार्श्वविन्यस्ताविति वचनान्नृत्तप्रसिद्ध (चक्र) वर्तनात्मकावूर्ध्वमण्डलावित्यन्ये ॥२०४॥

---

१ GOS निविष्टौ तौ।

उद्वेष्टितौ भवेदेको द्वितीयश्चापवेष्टितः[1]।
भ्रमितावुरसः स्थाने ह्यू[2]रोमण्डलिनौ स्मृतौ ॥२०५॥
[3]अलपल्लवकारालावूरोर्ध्वभ्रमणक्रमात् ।
पार्श्वावर्तश्च विज्ञेयावुरः पार्श्वार्धमण्डलौ ॥२०६॥
हस्तौ तु मणिबन्धान्ते कुञ्चितावञ्चितौ यदा ।
[4]खटकाख्यौ तु तौ स्यातां मुष्टिकस्वस्तिकौ तदा ॥२०७॥
पद्मकोशौ यदा हस्तौ [5]व्यावृत्तपरिवर्तितौ ।
नलिनीपद्मकोशौ तु तदा ज्ञेयौ प्रयोक्तृभिः ॥२०८॥

---

अथ पार्श्वमण्डलौ—ताववेति । ऊर्ध्वमण्डलावेव पार्श्वगतौ पताकाकृती परस्परसम्मुखौ । अन्ये तु निर्वचनसमर्थनाशयेन स्वपार्श्व एवाविद्धभुजभ्रमणवर्तनात्मकमनयो रूपमाहुः ।

अथोरोमण्डलिनौ—उद्वेष्टित इति । चकारसन्नियोगेन यौगपद्यमाह । उरस इति पञ्चमी । तत आरभ्य पार्श्वक्षेत्रे भ्रमितावेकस्यागमनस्य परस्य गमनमिति वर्तनया । षष्ठीत्यन्ये वदन्तः तत्रैव स्थानमित्याहु । ऊर्ध्वपार्श्वोरोमण्डलिषु हस्तपक्षाविपर्यये वर्तयन्ति ॥२०५॥

अथोरःपार्श्वमण्डलौ—अलपल्लवाकारालाविति । वक्षोदेशात उत्तानौ हस्तौ सस्तम्भोऽलपल्लवस्थानदायिना व्यावर्तितकरणेन निष्क्रम्यते । तत्समकालं च पार्श्वप्रसारितभुजौ । द्वितीयो हस्ततर्जन्याद्युद्वेष्टितसन्निवेशेनारालपदायिना वक्षोदेशमानीयते पुनरेवमिति । उरसि अर्धमेको हस्तः पार्श्वे च द्वितीयो मण्डलवद्गतागतक्रमेण कुरुत इति तत्सौवतौ ॥२०६॥

अथ मुष्टिकस्वस्तिकौ—हस्तौ तु मणिबन्धान्त इति । एकः कुञ्चितोऽरालवर्तनया अपरोऽञ्चितोऽलपल्लववर्तनया पुनरञ्चपर्याय इत्येव वर्तनानन्तरं खटकामुखाभ्यां स्वस्तिक इति पारम्पर्येण मुष्टिप्रभवत्वात्खटकस्य मुष्टिकस्वस्तिकव्यपदेशो मुष्टिशिखरकपित्थखटकानामन्यतमप्रयोगानुज्ञानार्थमिति वदिद ॥२०७॥

अथ नलिनीपद्मकोशाविति । पद्मकोशौ सम्मुखौ श्लिष्टमणिबन्धौ । ततोऽन्यतरस्य कनीयसी समुखी अपरस्याङ्गुष्ठ समुख क्रियया परिवर्तनमिति केचित् ।

---

१ KSS द्वितीयश्च विचेष्टित ।
२. KSS omits हि ।
३. NS. अरालपल्लवकरा ।
४. KSS. कटका ।
५. KSS. व्यावर्तं ।

करावुद्वेष्टितापौ तु प्रविश्यायालपल्लवौ ।
ऊर्ध्वप्रसारितावद्धौ [1]कर्तव्यावुल्वणाविति ॥२०९॥

पल्लवौ च शिरोदेशे सम्प्राप्तौ ललितौ स्मृतौ ।
कूर्परस्वस्तिकगतौ लताख्यौ वलिताविति ॥२१०॥

करणे तु प्रयोक्तव्यौ नृत्तहस्तौ विशेषत ।
तथार्थाभिनये चैव पताकाद्या प्रयोक्तृभि ॥२११॥

सकरोऽपि भवेत्तेषा प्रयोगोऽर्थवशात्पुन ।
प्राधान्येन पुन. सज्ञा नाट्ये नृत्ते करेष्विह ॥२१२॥

---

इद त्वत्र युक्तम् – व्यावृत्तेन परिवृत्तौ यदा पद्मकोशाविति सङ्गति । अस्मिन् मुष्टिक एव स्वस्तिकक्षेत्रे करौ कृत्वा द्वयोरपि यदा व्यावर्तितकरणेन कनिष्ठादीना परिवर्तनमन्योन्यपराङ्मुखता तदनन्तर पद्मकोशद्वय तदा । नलिन्यामनेककमल-समवादिद नाम ॥२०८॥

अथोल्वणौ । करावुद्वेष्टितावाविति । वक्ष क्षेत्रादुद्वेष्टितप्रधानौ हस्तौ विधायोर्ध्वसरयक्षेत्रे प्रसारितावाविद्धौ च हस्त्याभिमुखचलदङ्गुलीकावलपल्लवौ भवतस्तदोल्वणौ । हर्षपरवशा चित्तवृत्ति सूचयन इत्युल्वणौ ॥२०९॥

अथ ललितौ पल्लवौ चेति । अलपल्लवावेव तु शिर क्षेत्रप्राप्तौ ललितौ ललितौ चातुरश्र्येणाङ्गुलालित्योपादानात् ।

अथ वलितौ—कूर्परस्वस्तिकगताविति । कूर्परस्थान स्वस्तिकौ लताहस्तौ बाह्वोर्वलनाद्वलितौ । इति शब्द एवप्रकारवर्तनान्तरसूचकः ॥२१०॥

**करणसध्यान्करान्** वक्ष्यामीति । करणाङ्गत्वाद्विशेषणभागस्यैव सन्धिय-माणस्य करणस्य प्रवचन फलति । यथा लोहिताष्णीषा ऋत्विज प्रचरन्तीति वचना-न्तरादृत्विजा प्रचारलाभात् द्वाविति औविभक्तिकपदार्थविधानपरेति । करणमिति करणानि इति अर्थे पाठ । यत् क्रियते सम्पाद्यते बलादेवाभिनयविशेषो येनाङ्गुलि-तुलनक्रियाविशेषेण तत्करणम् । स्वसमाप्तौ निराकाङ्क्षा, परिसमाप्त्यभावे तु वर्तनाया क्रियान्तराकाङ्क्षा । तदेवेदमङ्गुष्ठवत्त्विदस्फोटनमङ्गुस्येति व्यवहरन्ति । तेन येषु हस्तेषु नत्यादे कुञ्चन तत्प्रवालवत् क्रिया, यथा मुकुलपञ्चतुरमृग-शीर्षकादिषु । एवमन्यदुत्प्रेक्ष्यम् । एतादस्य तु सर्वकरानाम् कार्यकरणतया साधारण्य

---

१. KSS, NS विज्ञेयौ ।

विप्रुता संयुताश्चैव नृत्तहस्ताः प्रकीर्तिताः ।
अतः परं प्रवक्ष्यामि करान् करणसंश्रयान् ॥२१३॥

सर्वेषामेव हस्तानां नाट्यहस्तनिर्देशिभिः ।
विधातव्या प्रयत्नेन करणं तु चतुर्विधम् ॥२१४॥

आवेष्टितमेकं स्यात् उद्वेष्टितमथापरम् ।
व्यावर्तितं तृतीयं तु चतुर्थं परिवर्तितम् ॥२१५॥

आवेष्ट्यन्ते यदङ्गुल्यस्तर्जन्याद्या यथाक्रमम् ।
अभ्यन्तरेण करणं तदावेष्टितमुच्यते ॥२१६॥

उद्वेष्ट्यन्ते यदङ्गुल्यः तर्जन्याद्या बहिर्मुखम्[1] ।
क्रमशः करण विप्रास्तदुद्वेष्टितमुच्यते ॥२१७॥

[2]आवर्त्यन्ते कनिष्ठाद्या [3]ह्यङ्गुल्योऽभ्यन्तरेण तु ।
यथा[4] क्रमेण करणं तद् व्यावर्तितमुच्यते ॥२१८॥

---

सर्वप्रकृतित्वम् । तत एव प्राधान्यात् पताकव्यपदेशः । नाट्यशब्देनाभिनयहस्ताः नृत्तशब्देन नृत्तहस्ताः सूचिताः । अभ्यन्तरेण तलसंमुखत्वेन बाह्यपार्श्वात् देहं प्रति वक्षःक्षेत्रपर्यन्तप्राप्त्या । अतो वैपरीत्येन कनिष्ठाद्यावर्तनं बहिर्मुखत्वं वक्षःक्षेत्रात् बहिर्निर्गमन इति तलसंमुखत्वमेवाभ्यन्तरत्वम् । एतद्विपर्यासेन बाह्यता ॥२११-२१८॥

ननु किमेतैरावेष्टिताद्यैरित्याशङ्क्य एषां साधनतमत्वं दर्शयति — नृत्तेऽभिनयप्रयोगे चेति । नृत्ते नाट्ये च करणानि प्रकर्षेण योजयेत् । केन हेतुनेत्याह पाणिभिरिति, यतो वर्तना जाता अन्यजनकास्य पूर्वपदचाङ्काविवेन । पाण्योर्नृत्तनाट्यहस्ताः । कथं प्रयोजयेदित्याह—मुखभ्रूनेत्रयुक्तानीति । यतो हि वर्तना यावन्ति तत एव मुखादीनीति तात्पर्यम् । नेत्रभ्रूमुखरागाः यैर्व्यञ्जिता इति स्थितमभिनयेषु पूरणार्थं प्रक्रिया । इयं तु वर्तनास्वित्यपौनरुक्त्यम् ॥२१९॥

---

१. KSS. तर्जन्या बहिर्मुखाः ।
२. KSS. आवर्त्यन्ते ।
३. GOS. omits हि
४. KSS. यत् ।

उद्वर्त्यन्ते कनिष्ठाद्या बाह्यतः[1] क्रमशो यदा ।
अङ्गुल्यः करणं विप्रास्तदुक्तं परिवर्तितम् ॥२१९॥

नृत्तेऽभिनययोर्वा पाणिभिर्वर्तनाश्रये ।
मुखभ्रूनेत्रयुक्तानि करणानि प्रयोजयेत् ॥२२०॥

[2]तिर्यक्तयोर्ध्वंसस्थो ह्यधोमुखश्चाञ्चितोऽपविद्धस्तु ।
मण्डलगतिस्तथा स्वस्तिकश्च पृष्ठानुसारी च ॥२२१॥

उद्वेष्टितः प्रसारित इत्येते वै स्मृताः प्रकारास्तु ।
बाह्वोरिति करणगता विज्ञेया नित्यं नृत्तप्रयोक्तृभिः ॥२२२॥

हस्तानां करणविधिर्मया समासेन निगदितो विप्राः ।
अत ऊर्ध्वं व्याख्यास्ये हृदयोदरपार्श्वकर्माणि[3] ॥२२३॥

आभुग्नमथ निर्भुग्नं तथा चैव प्रकम्पितम् ।
उद्वाहितं समं चैव उरः पञ्चविधं स्मृतम् ॥२२४॥

---

बाहुलग्नत्वादङ्गुलिक्रियायास्तद्भेदानाह तिर्यक्तयोर्ध्वसस्थ इत्यादि । तिर्यगिति पार्श्वगत्या, ऊर्ध्वसस्थ शिरसोऽप्युपरि गच्छन्, अधोमुखो भुवमाश्लिष्यन्, अञ्चितो वक्षोदेशान्निष्क्रम्य शिरःक्षेत्रमेव प्रत्यागतः, अपविद्धो मण्डलगते सर्वतो भ्रमन् । पृष्ठं स्वकायस्यानुसरतीति पृष्ठानुसारी ॥२२०॥ उद्वेष्टितोमणिबन्धनवर्तनया निष्क्रामणम् प्रसारितस्य तु स्पष्टमेवप्रमनुधावन् । एतेषु करणेषु चतुर्षु द्रुतमध्यविलम्बितादिवैचित्र्येण बाहुपर्यायेण च समस्तानि योजनया यदा नियुज्यन्ते तदा पातवर्तनादिशतसहस्राण्यत्रैवान्तर्भूतानीति यदेके चत्वारिंशतमन्ये एवमाहुस्तन्मिथ्यैव । तदाह करणगता विशेषा अवश्यं ज्ञातव्या इति । नित्यमेतद्व्यतिरिक्तप्रयोजनाभावात् ॥२२१-२२२॥

अथोरस कर्माण्याह—आभुग्नमित्यादि ॥२२३॥ निम्नमिति सपक्षोचम् । सर्वथिदिति मध्ये मध्ये, इसय शिथिलम् । निरवष्टम्भं कृत्वा व्याभुग्नावध पतन्ताविवांसौ ॥२२४॥ यत्र शीतेनापि विना शीतस्पर्शो । एवमेव मार्गे भ्रमनमिति

---

१ KSS बाह्यतः.

२. KSS. तिर्यगूर्ध्वंगत चैव तथाऽधोमुख एव च ।

३. KSS. ends here 9th chapter.

निम्नमुन्नतपृष्ठं च [1]व्याभुग्नांसं श्लथं क्वचित् ।
आभुग्नं तदुरो ज्ञेयं कर्म चास्य निबोधत ॥२२५॥

सम्भ्रमविषादमूर्च्छाशोकभयव्याधिहृदयशल्येषु[2] ।
कार्यं [3]शीतस्पर्शे वर्षे [4]लज्जान्वितेऽर्थवशात् ॥२२६॥

स्तब्धं[5] च निम्नपृष्ठं च निर्भुग्नांसं समुन्नतम् ।
उरो निर्भुग्नमेतद्धि कर्म चास्य निबोधत ॥२२७॥

स्तम्भे मानग्रहणे विस्मयदृष्टे च सत्यवचने च ।
अहमिति च दर्पवचने गर्वोत्सेके[6] तु कर्तव्यम् ॥२२८॥

[[7]दीर्घनिश्वसिते चैव जृम्भणे मोटने तथा ।
बिब्बोके च पुनः स्त्रीणां तद्विज्ञेयं प्रयोक्तृभिः] ॥२२९॥

कार्योत्क्षेपैरुरो [8]यत्र निरन्तरकृतं कृतम् ।
प्रकम्पितं तु [9]विज्ञेयमुरो नाट्यप्रयोक्तृभिः ॥२३०॥

हसितरुदितादिसंभ्रमभयश्रमव्याधिपीडितार्थेषु ।
नानाभावोपगतं कार्यमुरो नाट्ययोगेषु ॥२३१॥

हसितरुदितेषु कार्यं श्रमे भये श्वासकाशयोश्चैव ।
हिक्कादुःखे च तथा नाट्यज्ञैः संप्रयोगेन ॥२३२॥

---

...र्थं इत्युक्तम् ॥२२५॥ सम्यगुन्नितं कृत्वा निष्क्रान्तौ पृष्ठौ भुग्नावंसौ यत्र ॥२२६॥
हिक्का स्पष्टम् ॥२३०॥

---

१. NS., KSS व्याभुग्न संनतं ।
२. NS शिल्पेषु ।
३. KSS तेन स्पर्शे ।
४. KSS लज्जायितं ।
५. NS स्वच्छं ।
६. KSS गर्वोत्साहे तु ।
७ KSS does not read it
८. KSS यत्तु ।
९ KSS विज्ञेयमुरो ।

उद्वाहित[1]मूर्ध्वगतमुरो ज्ञेय [2]प्रयोक्तृभि ।
दीर्घोच्छ्वसनता लोके जृम्भणादिषु चेष्यते ॥२३३॥

सर्वं ससौष्ठवरङ्ग[3]श्चतुरस्रकृतं कृतम् ॥
उरः समं तु विज्ञेय स्वस्य सौष्ठवसयुतम् ॥२३४॥

एतदुक्तं मया सम्यगुरसस्तु विकल्पनम् ।
अत [3]ऊर्ध्वं प्रवक्ष्यामि पार्श्वयोरिह लक्षणम् ॥२३५॥

नत समुन्नतं चैव प्रसारितविवर्तिते ।
[4]तथापसृतमेवं तु पार्श्वयो कर्म पञ्चधा ॥२३६॥

[5]कटिर्भवेत्तु व्याभुग्ना पार्श्वमाभुग्नमेव च ।
तथैवापसृतांस च किञ्चित्पार्श्वंनत स्मृतम् ॥२३७॥

[6]तस्यैव चापर पार्श्वं विपरीत तु युक्तित. ।
कटीपार्श्वभुजांसैश्चाभ्युन्नतैस्त भवेत् ॥२३८॥

आयामनादुभयतः पार्श्वयो स्यात् प्रसारितम् ।
[7]परिवर्तात्त्रिकस्यापि विवर्तितमिहेष्यते ॥२३९॥

[8]विवर्तितापनयनाद् भवेदपसृत पुन ।
पार्श्वलक्षणमित्युक्त विनियोग निबोधत ॥२४०॥

उपसर्पे नत कार्यमुन्नत चापसर्पणे ।
प्रसारित प्रहर्षादौ परिवृत्ते विवर्तितम् ॥२४१॥

[9]विनिवृत्ते त्वपसृतं पार्श्वमर्थवशाद्भवेत् ।
एतानि पार्श्वकर्माणि जठरस्य निबोधत ॥२४२॥

---

शिष्टकटीत्रिकस्कन्धकर्माणि पार्श्वकर्माणीति ॥२४०॥

---

१ GOS. तूर्ध्वंकृत ।
२ KSS प्रयोगत ।
३. GOS' पर ।
४ KSS तथा पसृतमेव ।
५. GOS. कटी ।
६. GOS नतस्यैवापर ।
७ KSS, NS परिवर्ति ।
८. NS विवर्तितोऽनयनात् KSS विवर्तितापनयनात् ।
९ KSS परिवर्ती ।

क्षामं खल्वं च पूर्णं च संप्रोक्तमुदरं त्रिधा ।
तनु क्षामं नतं खल्वं पूर्णमाध्मातमुच्यते ॥२४३॥

क्षामं [1]हास्येऽथ रुदिते निःश्वासे जृम्भणे भवेत् ।
व्याधिते तपसि श्रान्ते क्षुधार्ते खल्वमिष्यते ॥२४४॥

पूर्णमुच्छ्वसिते स्थूले व्याधितात्यशनादिषु ।
इत्येतदुदरं प्रोक्तं कट्याः कर्म निबोधत ॥२४५॥

अन्ये तु क्षामं खल्लं समं पूर्णमुदरं स्याच्चतुर्विधम् ।
छिन्ना चैव निवृत्ता च रेचिता कम्पिता तथा ।
उद्वाहिता चैव कटी नाट्ये नृत्ते च पञ्चधा ॥२४६॥

कटी मध्यस्य वलनात् छिन्ना सम्परिकीर्तिता ।
पराङ्मुखस्याभिमुखी निवृत्ता स्यान्निवर्तिता ॥२४७॥

सर्वतो भ्रमणाच्चापि विज्ञेया रेचिता कटी ।
तिर्यग्गतागता क्षिप्ता[2] कटी ज्ञेया प्रकम्पिता ॥२४८॥

नितम्बपार्श्वोद्वहनात् शनैरुद्वाहिता कटी ।
कटीकर्म मया प्रोक्तं विनियोगं निबोधत ॥२४९॥

छिन्ना व्यायामसंभ्रान्तव्यावृत्तप्रेक्षणादिषु ।
निवृत्ता वर्तने चैव रेचिता भ्रमणादिषु[3] ॥२५०॥

कुब्जवामननीचानां गतौ कार्या प्रकम्पिता ।
स्थूलेषूद्वाहिता योज्या स्त्रीणां लीलागतेषु च ॥२५१॥

कम्पनं वलनं चैव स्तम्भनोद्वर्तने तथा ।
निवर्तनं च पञ्चैतान्यूरुकर्माणि कारयेत् ॥२५२॥

नमनोन्नमनात्पार्ष्ण्योर्मुहुः स्यादूरुकम्पनम् ।
गच्छेदभ्यन्तरं जानु[4] -यत्र तद्वलनं स्मृतम् ॥२५३॥

स्तम्भनं चापि विज्ञेयमपविद्धक्रियात्मकम् ।
वलिताविद्धकरणादूर्वोरुद्वर्तनं स्मृतम् ॥२५४॥

---

गतेषु तदुक्तमपविद्धक्रियात्मकमिति निष्क्रियत्वमिति यावत् ॥२५४॥

---

1. KSS. हासे च ।
2. GOS. क्षिप्तं ।
3. KSS. भ्रमणेषु च ।
4. KSS. NS अभ्यन्तराज्जानु ।

पार्ष्णिरभ्यन्तरं गच्छेद्यत्र तत्तु निवर्तनम् ।
गतिष्वधमपात्राणां भये चापि हि कम्पनम् ॥२५५॥

वलनं चैव कर्तव्यं स्त्रीणां स्वैरपरिक्रमे ।
साध्वसे च विषादे च स्तम्भनं तु प्रयोजयेत्[1] ॥२५६॥

व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं बुधैः ।
निवर्तनं तु कर्तव्यं सम्भ्रमादिपरिभ्रमे ॥२५७॥

[2]यथादर्शनमन्यच्च लोकाद् ग्राह्यं प्रयोक्तृभिः ।
इत्यूर्वोर्लक्षणं प्रोक्तं जङ्घायास्तु निबोधत ॥२५८॥

आवर्तितं नतं क्षिप्तमुद्वाहितमथापि च ।
परिवृत्तं तथा चैव जङ्घाकर्माणि पञ्चधा ॥२५९॥

वामो दक्षिणपार्श्वेन दक्षिणश्चापि वामतः ।
पादो यत्र व्रजेद्विप्रा[1] तदावर्तितमुच्यते ॥२६०॥

जङ्घास्वस्तिकयोगेन क्रमादावर्तितं नयेत् ।
जानुनः [3]कुञ्चनाच्चैव नतं ज्ञेयं प्रयोक्तृभिः ।

[4]विक्षेपाच्चैव जङ्घाया क्षिप्तमित्यभिधीयते ॥२६१॥
[[5]नतं स्याज्जानुनमनात् क्षिप्तं विक्षेपणाद् बहिः ] ।

उद्वाहितं च विज्ञेयमूर्ध्वमुद्वाहनादपि ।
प्रतीपनमनं यत्तु परिवृत्तं तदुच्यते ॥२६२॥

आवर्तितं प्रयोक्तव्यं [6]विदूषकपरिक्रमे ।
नतं चापि हि कर्तव्यं स्थानासनगतादिषु[7] ॥२६३॥

---

बहिः पार्ष्णिक्षेपाच्च पतनमाविद्धमूरो वर्तनं । करण इति क्रियायां घस्यामित्यनेन पुनः पुनः पार्ष्ण्योः पतनम् । पादतलाग्रात्तु स्थानं च कर्तव्यमिति

---

१ GOS. सम्प्रयोजयेत् ।
२. KSS. यथा दर्शन··· ।
३ KSS. कुञ्चन ।
४. KSS. विक्षेप ।
५ KSS. does not read it.
६ KSS., NS सम्भ्रमादि ।
७. NS. गमादिषु ।

क्षिप्तं व्यायामयोगेषु ताण्डवे च प्रयुज्यते ।
तथा चोद्घट्टितं [1]कुर्यादाविद्धगमनादिषु ॥२६४॥

ताण्डवेषु प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः ।
इत्येतज्जङ्घयोः कर्म पादयोस्तु निबोधत ॥२६५॥

उद्घट्टितः समश्चैव तथाग्रतलसञ्चरः ।
अञ्चितः [2]कुञ्चितश्चैव पादः पञ्चविधः स्मृतः ॥२६६॥

स्थित्वा पादतलाग्रेण पार्ष्णिर्यस्य भुवि निपात्यते ।
यस्य पादस्य करणे भवेदुद्घट्टितस्तु सः ॥२६७॥

[3]अयमुद्वेष्टितकरणे त्वनुकरणार्थं प्रयोगमासाद्य ।
द्रुतमध्यमप्रचारः सकृदसकृद्वा प्रयोक्तव्यः ॥२६८॥

स्वभावरचिते भूमौ समस्थाने च यो भवेत् ।
[4]समः पादः स विज्ञेयः स्वभावाभिनयाश्रयः ॥२६९॥

[5]स्थिरस्वभावाभिनये नानाकरणसंश्रये ।
चलितश्च पुनः कार्यो विधिज्ञैः[6] पादरेचिते ॥२७०॥

[7]समस्यैव यदा पार्ष्णिः पादस्याभ्यन्तरे भवेत् ।
बहिः पार्श्वस्थितोऽङ्गुष्ठस्त्र्यस्रपादस्तु स स्मृतः ॥२७१॥

स्थपरत्वा (कृत्वा ?) समपदं स्थानमवशान्ते तथैव च ।
स्यादिङ्गितलयादिष्वर्थेषु त्र्यस्रः पादो यथाविधि ॥२७२॥

अस्यैव समपादस्य पार्ष्णिरभ्यन्तरे भवेत् ।

---

दर्शयति । ऊर्ध्वकृतस्य चटुनादुद्घट्टितं । उद्वेष्टितस्य करणमुद्वेष्ट्यते यदङ्गस्य इत्यादि तदेव बाहुप्रभेदादवहुधा । तत्राम्य प्रयोग इति वर्तनाश्रयो विनियोगः । केचित्तु प्रयोगमासाद्यानुकरणार्थमभ्यस्य प्रयोग इत्याहुः यथा विप्रमोर्वशीयो पुरूरवःप्रभृते । एतेन नाट्यविषयो विनियोग उक्तः । अग्रगे तलेन च सञ्चरत इति ॥२६६॥

---

१. GOS कार्यम् ।
२. NS कुञ्चितः सूचीपादः षोढा प्रकीर्तितः ।
३. KSS, NS. अयमुद्घट्टितकरणेऽत्र ।
४. GOS, समपादः ।
५. KSS स्थिरः स्वभाव ।
६. KSS, NS. विक्षेपः ।
७. KSS, NS do not read verses समस्यैव to संश्रय. ।

स्थपाद स विज्ञेयः स्थानकादिषु सथयः ॥२७३॥
उत्क्षिप्ता तु भवेत्पार्ष्णिः प्रसृतोऽङ्गुष्ठकस्तथा ।
अङ्गुल्यश्चाञ्चिता सर्वा [1]पादेऽग्रतलसञ्चर ॥२७४॥

तोदननिकुट्टने स्थितनिशुम्भने भूमिताडने भ्रमणे ।
विक्षेपविविधरेचकपार्ष्णिकृतागमनमेतेन ॥२७५॥

पार्ष्णिर्यस्याञ्चिता भूमौ पादमग्रतल तथा ।
अङ्गुल्यश्चाञ्चिता सर्वा स पादस्त्वञ्चित स्मृत [2] ॥२७६॥
[3]पादाग्रतलसञ्चारे वर्तितोद्वर्तिते तथा ।
[4]एष पादाहते कार्यो नानाभ्रमरकेषु च ॥२७७॥

उत्क्षिप्ता यस्य पार्ष्णिः स्यादङ्गुल्य कुञ्चितास्तथा ।
तथा कुञ्चितमध्यश्च स पाद कुञ्चित स्मृत ॥२७८॥

उदात्तगमने चैव वर्तितोद्वर्तिते तथा ।
[5]उत्क्षिप्ता तु भवेत्पार्ष्णिरङ्गुष्ठाग्रेण सस्थित ॥२७९॥

वामश्चैव स्वभावस्थ सूचीपाद प्रकीर्तित ।
[6]नृत्ते नूपुरकरणे प्रयोगस्तस्य कीर्त्यते ॥२८०॥

---

तथा तोदन प्रेरणम्, निकुट्टन तदवग्रहणम्, स्थित स्थानकादि, शुम्भन पीडन ताडन हननम्, भ्रमण मनस, विक्षेपो भूतस्यापसारणम् । विविधरेचक करपादरेचक ।२७५। अञ्चिता इति प्रसृता अञ्चितमुद्वर्तित विद्रूपकादिगतौ ।२७६। भ्रमरी चारी, येषु प्रयोगेषु ते भ्रमरका ।२७७। सूची पश्चात् पादमन्ये पठन्ति । नूपुरस्य पादभूषणस्य करणे बन्धने । कट्यूरुजङ्घापादकर्माण्येव परस्परमिश्रीभूततावैचित्र्येण समुदिततया प्रयुज्यमानानि चारीत्युच्यन्ते । तत्समुदायस्य मण्डलभेदेन गतिनिष्पद्यत इति कट्यादिपादान्तकर्मणैव चार्य उक्ताः । अत एव तासा विनियोग पृथङ् नोक्त ॥२८०॥

---

१. GOS पादोऽग्रतलसञ्चर ।
२ KSS, NS पार्ष्णिस्तता ।
३ NS स पादोऽञ्चित उच्यते ।
४ NS. पादाग्रस्थितसचारे ।
५ NS. अनित्राम्तत्रमे चैव पादमेत प्रयोजयेत् ।
६. KSS उत्क्षिप्त ··· सस्थिता ।
७ NS नृत्तेऽन्त पुरकरणे नीतित ।

अतिक्रान्तक्रमे चैव पादमेतं प्रयोजयेत् ।
पादजङ्घोरुकरणे कर्म कार्यं प्रयोक्तृभिः ॥२८१॥
पादस्य करणं सर्वं जङ्घोरुकृतमिष्यते ।
यथा पादः प्रवर्त्तेत तथैवोरु प्रवर्तते ॥२८२॥
[1]अनयोः समानकरणात् पादचारीं प्रयोजयेत् ।
इत्येतदङ्गजं प्रोक्तं लक्षणं कर्म चैव हि ॥२८३॥
अत परं प्रवक्ष्यामि चारीव्यायामलक्षणम् ॥२८४॥

[2]इति भरतीये नाट्यशास्त्रे अङ्गाभिनयो नाम नवमोऽध्यायः ।

---

समनन्तर त्वध्यायत्रयं तद्विनियोगोदाहरणप्रदर्शनार्थमित्येतत्सर्वं मनसि कृत्वाह पादजङ्घोरुकरणमित्यादि । सममिति सह ॥२८१॥ अत्र हेतु पादस्येति नाभिजङ्घोरुकरणमित्यादिकर्मण्योऽन्यत् पादकर्मेत्यर्थ ।

एतदेव स्फुटयति यथा पाद इति ॥२८२॥ अनयोरिति मध्ये अङ्गानि सर्वाङ्गता अत्र च सर्वमाङ्गिकमियतैवोक्तमिति दर्शयति इत्येतदिति ॥२८३॥ अनन्तरवक्तव्यमामुखयति ।

अत परमिति । चारीव्यायामा लक्ष्यन्ते उदाहरणतया येनेति शिवम् ॥ २८४ ॥

शिशिरतरकिरणकलिकाचङ्कारविभूषितभक्तभङ्गुरताप ।
अभिनवगुप्तो नवमाध्याये सन्देहताहमपनुदतादि स्म ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेद विवृतावभिनवभारत्यां आङ्गिकाध्यायो नवम ॥

---

१. NS. तयो ।
२. KSS इति भरतीये नाट्यशास्त्रे शरीराभिनयो नाम दशमोऽध्यायः ।

# नाट्यशास्त्रम्

## अथ दशमोऽध्यायः

एवं पादस्य जङ्घाया ऊर्वोः[1] कट्यास्तथैव च ।
समानकरणे चेष्टा सा चारीत्यभिधीयते ॥१॥
[2]विधानोपगताश्चार्यो व्यायच्छन्ते परस्परम् ।
यस्मादङ्गसमायुक्तास्तस्माद्व्यायाम उच्यते ॥२॥
एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता ।
द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ॥३॥

---

### अभिनवभारती

निश्चलस्थितिमद्व्योमचारीमद्गतिविग्रहः ।
सर्वदा ध्वनिमात्रात्मा शम्भुर्विजयतात् प्रभुः ॥

चारीव्यायामलक्षणमित्युक्तम् ॥१॥

तत्र समासे सन्देहः व्यायामशब्दार्थे च । चरेर्हि करणे भावे वा औणादिक इञ्, कृदिकारादक्तिन 'ङीप्' इति च चारीशब्दः प्रसिद्धार्थ इत्यभिप्रायेण सन्देहद्वयमपाकर्तुमाह— विधानोपगता इति । अन्योन्ययोजनापतिताश्चार्यो व्यायामशब्दस्यार्थ इति तात्पर्यम् । चार्य एव व्यायाम इति कर्मधारय इत्यर्थः । अस्यार्थस्तु अन्वर्थं व्यायच्छन्ते परस्परतया आपतन्ति इति । कुत्र नियम इत्याह—परस्परमिति । पूर्वा चारी परया नियता न तु पूर्वस्यामिति तेनाकर्मकत्वादात्मनेपदम् । परस्परोपपदाच्चेति कर्मव्यतिहारजमात्मनेपदं निषेधति, न तु आङो यमहन इति । ननु किं तन्नियमनमित्याह । विधानोपगता इति विधानेनैकस्या नियततेति अपरा उपगता समादेवागता । नन्वेवमन्योन्याश्रयम् ? न, अङ्गेन प्रधानभूतेन केनचित्, सम्यगायुक्ता प्रयुक्ता प्रवर्तिता । यत्नायत्नापेक्षया बहुवचनम् । एतदुक्तं भवति—किञ्चिदङ्गं प्रधानं यत् सम्भवति यथा हस्तौ वा अभिनये, पादौ वा गतौ, तदा तदुपयोगिनी चारी प्रधानं, तच्चारीसपर्युचिता च पूर्वा चारी आधीयते परया चेति परस्परनियमवशाच्चार्यो व्यायाम इति ॥२॥

तत्र व्यायामस्य संक्षिप्तमध्यमविस्तीर्णतया भेदान्निरूपयति । एकपादप्रचारो य इति । एकान्तिपादेन योऽयादिप्रचारो व्याक्षिप्तः । द्विपादेति । पादशब्देन तत्प्रचार नामेति प्रसिद्धार्थम् । तुल्यायामप्रसिद्धादन्यदेवेदं सञ्ज्ञात्वेनापुनर्न निरूप्यत इत्यर्थः । एष संक्षिप्तो व्यायाम अभिनयान्तरादौ ॥३॥

---

१. GOS. उरो. ।
२. KSS, NS. विधानोभगत: ।

करणानां समायोगः[1] खण्डमित्यभिधीयते ।
खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥४॥

चारीभिः प्रसृतं नृत्तं चारीभिश्चेष्टितं तथा ।
चारीभिः शस्त्रमोक्षश्च चार्यो युद्धे च कीर्तिताः ॥५॥

यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संस्थितम् ।
नहि चार्या[2] विना किञ्चिन्नाट्येऽङ्गं सम्प्रवर्तते ॥६॥

तस्माच्चारीविधानस्य सम्प्रवक्ष्यामि लक्षणम् ।
या यस्मिंस्तु यथा योज्या नृत्ते युद्धे गतौ तथा[3] ॥७॥

---

करणानामिति बहुवचनात् त्रीणि तानि, "कपिञ्जलानालभेत" इति यथा । अन्यथा बहुत्वानियमे खण्डानां मण्डलस्य च न प्रविभागः । एष उपयुक्तो मध्यमो व्यायामः, त्रिभिश्चतुर्भिरित्येतच्चतुरस्यानां अभिप्रायेण, वाग्रहणान्मिश्रणमपि सूचयन् सङ्ख्यान्तरमपि गृह्णीते । तथा हि—चतुर्थे सूचीविद्धाख्ये (११-२१) मण्डले तु पादचारीर्वक्ष्यति । सूचीं वामपदं दद्यात् इत्यादि । सप्तमे स्यन्दिताभिख्ये—'भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् । षट्सङ्ख्यं सप्तसङ्ख्यं वा' इति (११-३०) दशमेऽर्धधिका (१०-१७) इति एवमन्यत्र ॥४॥

तत्र सौष्ठवत्वे तावच्चारीणां दर्शयति चारीभिरिति । नृत्तं चाङ्गहारात्मकं तच्चारीभिः प्रसृतं च व्याप्तमिति प्रत्येकं चेष्टितं गतिः शस्त्रमोक्ष इति । चक्रकुन्तादि-युद्धम् । युद्धे चेति, मल्लहननादि युद्धे नियुद्धे च ॥५॥

प्रकृतेऽप्युपयोजयति—यदेतदिति । यच्छब्देन व्याख्यातधर्मपूर्वकं, एतच्छ-ब्देन व्याख्यायमानधर्मयोगं परामृश्यत इति विस्तीर्णता नाट्यस्याह । किञ्चिदङ्गमिति शिरोहस्तादि, किञ्चिद्धि चार्या सह किञ्चित्पूर्वापरभावेन । संप्रवर्तत इति; तत्त्वेन प्रवर्तते, अविरत्येन प्रवर्तते, सम्यक् प्रवर्तते वा, इति यथा नियमः केचित्पक्षोऽप्यु-पसर्गयोगः तथाङ्गेऽपि स्वीकारः, तत्र निष्पन्न इति मतुभिप्रायार्थः ॥६॥

प्रकृतामिदानीं भेदबहुत्वाच्च न पदार्थविनिश्चितसामान्यलक्षणमात्रान्तर्भाव-कमिति विरच्यते । लक्षणमिति उदाहरणम् । नृत्त इति अभिनीतिः । "नपुंसक" मित्येकशेष तथेति उक्तं, वक्ष्यते चेति शेषः । करणाङ्गहारादौ । तत्र नृत्ते उक्त, युद्धे वक्ष्यते न्यायेपूर्ववमिति शेषः, गतौ च द्वादशाध्याये वक्ष्यते इत्यध्यायत्रयार्थं इह सूचितम् ॥७॥

---

1. KSS समायोगात् ।
2. NS चार्यो ।
3. NS. reads it as तथा गतौ ।

समपादा स्थितावर्ता[1] शकटास्या तथैव च ।
अध्यर्धिका चाषगतिर्विच्यवा[2] च तथापरा ॥८॥
एडकाक्रीडिता बद्धा ऊरुद्वृत्ता तथाड्डिता ।
उत्स्यन्दिता च जनिता स्यन्दिता चापस्यन्दिता ॥९॥
समोत्सारितमत्तल्ली मत्तल्ली चेति[3] षोडश ।
एता भौम्य स्मृतास्चार्य शृणुताकाशिकी पुन ॥१०॥
अतिक्रान्ता ह्यपक्रान्ता पार्श्वक्रान्ता तथैव च ।
ऊर्ध्वजानुश्च सूची च तथा नूपुरपादिका ॥११॥
डोलपादा तथाक्षिप्ता[4] आविद्धोद्वृत्तसंज्ञिते ।
विद्युद्भ्रान्ता ह्यलाता च भुजङ्गत्रासिता[5] तथा ॥१२॥
मृगप्लुता च दण्डा[6] च भ्रमरी चेति षोडश ।
आकाशिक्य स्मृता ह्येता लक्षण च निबोधत ॥१३॥
पार्श्वैर्निरन्तरकृतैस्तथा समनखैरपि ।
समपादा स्मृता[7] चारी विज्ञेया स्थानसश्रया ॥१४॥

---

तत्रोद्देशमाह—भौम्य एता इति । भूमौ भवा भौम्य, एवमाकाशिक्य उपरिचरनाम् । स्मृता इति वेदोदाहरणेऽत्र यावत्समर्थ्यते तावद्व्युत्पादनार्थं शिष्टा । तैवंलक्ष्यम् तेनैतन्माणज्ञनीयम् । यदि नेद परिगणन क्रियता भेदेनोक्तेति न तथ स्पष्टम् । पल्लक्षणमन्वर्थ च तद्व्याख्यिते ॥८-१३॥

अथ समपादा—ननु समपादा कथ वा चारीत्याह—स्थानसश्रयेति यदा समपाद एव स्थानान्तर गच्छति तदा चरणाच्चारी भवत्येव योग्यतया तथा व्यपदेशादिति भाव ॥१४॥

अथ स्थितावर्ता – भूमिपृष्ठेनेति । अग्रतलसञ्चरेणाभ्यन्तरमण्डल द्वितीयपार्श्वजानुस्वस्तिकान्त, पुनः शब्दो विशेष द्योतयन् सन्निवेशयोगमाह । तेन स चेत्

---

१. KSS, NS. स्थिता वार्ता ।
२. KSS, NS. विच्यवाचा ।
३. KSS, चापि ।
४. KSS. NS. व्याविद्धोद्पुतसंज्ञिते । BHU व्याविद्धोद्वृत्तसंज्ञिते ।
५. NS. भुजङ्गनासिता ।
६. BHU. दण्डपादा ।
७. GOS तु सा ।

भूमिपृष्ठेन पादेन कृत्वाभ्यन्तरमण्डलम् ।
पुनस्तत्सादयेदन्यं स्थितावर्ता[1] तु सा स्मृता ॥१५॥

निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् ।
उद्वाहितमुरः कृत्वा शकटास्यां[2] प्रयोजयेत् ॥१६॥

सव्यस्य पृष्ठतो वामश्चरणस्तु यदा भवेत् ।
तस्यापसर्पणं[3] चैव ज्ञेया साध्यर्धिका बुधैः ॥१७॥

पादः प्रसारितः सव्यः पुनश्चैवोपसर्पितः ।
वामः सव्यापसर्पी च चाषगत्यां विधीयते ॥१८॥
[4]विच्यवात् समपादाया विच्यवां सम्प्रयोजयेत् ।
निकुट्टयंस्तलाग्रेण[5] पादस्य धरणीतलम् ॥१९॥

---

स्वस्तिकत्वेन श्लिष्टस्ततो द्वितीयमुत्सारयेन् स्वपार्श्वे वर्तयेदेतस्य स्थानमपरस्यामिति तथा ॥१५॥

अथ शकटास्या—निषण्णाङ्गस्त्विति । प्रयत्नधृतपूर्वकाय इत्यर्थः । शकटमसनीय धैर्य यथा । एकस्मिन् पादे समेऽङ्गुष्ठकुञ्चितं पश्चेतरं कृत्वा जानुनः कुञ्चने जङ्घाप्रसारणे च स्वपार्श्वे च स्थितिमसञ्चरस्थापनं तु निरोधनं रेचनमिवेति केचिदेनामाहुः । एतच्च लक्षणं नाट्यार्थासङ्गतमेव ॥१६॥

अथाध्यर्धिका सव्यस्येति दक्षिणस्य । पृष्ठत इति पार्ष्णिदेशे । तस्येति दक्षिणस्योपसर्पणे स्वपार्श्वाभिमुख्याश्रिततया स्थितिः । अव्यतिरेकेति अपसर्पणाल्लक्षणस्थानयो मन्तव्या । एवमस्य पूर्णा गतिरन्यस्य पादस्य पूर्णार्धिकेत्यन्ये । करणग्रन्थाच्चैवमुक्तं वामस्यापि पृष्ठसङ्गतमेव ॥१७॥

अथ चाषगति सव्य इति सव्योऽपसर्पणेन, सर्वत्र प्रसारित इति तालमात्रमग्रतः पुनः स एवापसर्पितो द्वितालमात्रं पश्चान्नीतः, वामः सव्येन सहापसर्पति । किञ्चिदुत्प्लुत्य सव्यवामावपसर्पतः श्लिष्टपदत्वेनेति समासमपसर्पणादौ चाषस्येव गतिः चाषगतिः । सव्योपसर्पी चेत्यन्ये पठन्ति, तत्र सव्योत्सरणानन्तरं श्लिष्टत्वमपसर्पणं चार्थः ॥१८॥

अथ विच्यवा—पादस्येति पादयोरित्यर्थः ॥१९॥

---

१ NS, KSS. स्थिता वार्ता ।

२. KSS., शकटास्यं ।

३. KSS, NS सव्योपसर्पणं BHU. तस्योपसर्पणे ।

४. KSS, NS. वीच्यवात् समपादायां विच्यवां सम्प्रयोजयेत् ।

५. KSS, NS. तलाग्रेण ।

तलसञ्चरपादाभ्यामुत्प्लुत्य पतनं तु यत् ।
पर्यायशश्च[1] क्रियते एडकाक्रीडिता तु सा ॥२०॥

अन्योन्यजङ्घासंवेधात् कृत्वा तु स्वस्तिकं ततः ।
ऊरुभ्यां वलनं यस्मात् सा बद्धा चार्युदाहृता ॥२१॥

तलसञ्चरपादस्य पार्ष्णिर्बाह्योन्मुखो यदा ।
जङ्घाञ्चिता तथोद्वृत्ता ऊरूद्वृत्तेति सा स्मृता ॥२२॥

अग्रतः पृष्ठतो वापि[2] पादस्तु तलसञ्चरः ।
द्वितीयपादो निघृष्टः यस्यां[3] स्यादड्डिता तु सा ॥२३॥

---

अथैडकाक्रीडिता—उत्प्लुत्य, किञ्चिदेकवारं, सन्धिगुल्फदेशेभ्यः पुनरुत्प्लुतिः अङ्गान्तरेणैवमिति पर्यायशः पतनं यत्र चार्यां सा अजकादितुल्यत्वादेडकाक्रीडिता ॥२०॥

अथ बद्धा—केवलयोरेवोर्वोर्वलनं स्थित एव जङ्घास्वस्तिक इति बद्धां केचिदाहुः । अन्ये तु स्वस्तिकापसरणेन पादतलाग्रयोर्मण्डलभ्रमणपूर्वकं यत् स्वस्वपार्श्वगमनं तदूरुबन्धनमाहुः । जङ्घयोः सम्बन्धनाद्बद्धा ॥२१॥

अथोरूद्वृत्ता—अग्रतलसञ्चरस्य पादस्य सम्बन्धिनी पार्ष्णिर्द्वितीयपादपृष्ठभागोन्मुखी यदा भवति जङ्घा च तथा उद्वृत्ता तदा जानुनमनादाकुञ्चिता, द्वितीयजङ्घासम्मुखं वलनात् । ऊरोरूर्ध्वविवर्तनात् लज्जेर्ष्यादिविषया ऊरूद्वृत्ता । अन्ये तु पार्ष्णिर्द्वितीयपादाग्रतलसञ्चरवाह्योन्मुखीत्याहुः ॥२२॥

अथाड्डिता—अग्रत इति । अपिः समुच्चये, वा पर्याये । तेन समस्थित एकोऽग्रतलसञ्चरः पादः द्वितीयः क्रमादग्रे पृष्ठे च निघृष्टः श्लिष्टः कार्य इति अड्डिता, पादस्य स्वस्थानातिक्रमणात् । अड्ड अतिक्रमहिंसयोरित्यस्य इतवि रूपम् पठन्ति, सत्त्व च ॥२३॥

अथोत्स्यन्दिता—बाह्येन कनिष्ठाङ्गुलिभागेन अभ्यन्तराङ्गुष्ठभागेन निवर्तते रेचकाभ्यां पादाभ्यां गमागमं कुरुते । किमवधीत्याह—पादरेचितस्यापहारम्, शोभा-

---

१. KSS, NS पर्यायत ।

२ NS. चापि ।

३ KSS, यत्र ।

शनैः पादौ निवर्तेत[1] बाह्येनाभ्यन्तरेण च ।
यत्र चक्रानुसारेण सा चार्युत्स्यन्दिता स्मृता ॥२४॥
मुष्टिहस्तश्च वक्षःस्थः करोऽन्यश्च प्रवर्तितः ।
तलसञ्चरपादश्च जनिता चार्युदाहृता ॥२५॥
पञ्चतालान्तरं पादं प्रसार्य स्यन्दितां न्यसेत् ।
द्वितीयेन तु पादेन तथापस्यन्दितामपि ॥२६॥
तलसञ्चरपादाभ्यां[2] घूर्णमानोपसर्पणैः ।
[3]समोत्सरितमत्तल्ली व्यायामे समुदाहृता ॥२७॥

---

पेसयोत्क्रान्तमस्याम् । अन्यथा. प्रत्यावर्तनरूपस्पन्दितत्वं तत्तु अन्वर्थादियमुत्स्पन्दिता । रेचकं नृत्तहस्तमत्र केचिदाहुः ॥२४॥

अथ जनिता—तलसञ्चरपादः प्रवर्तित इति । एतदेवाभ्या. स्वरूप मुष्टेर्वक्षोगामित्वं हस्तान्तरस्य च प्रवर्तनमिति चर्व्यवस्थानम् । समस्तगतीनामिव वलनं करोति प्रारम्भरूपत्वादिति जनिता ॥२५॥

अथ स्यन्दितापस्यन्दिते - क्रमशयो निपतितः पादो दक्षिणस्तु पञ्चतालान् प्रसारित. 'अन्यैव दक्षिणं पादं पञ्चतालान् प्रसारितः । तत्र स्मृतो मध्यमया इति । सा स्यन्दिता प्रसारणधर्मत्वात् । एतद्विपर्ययादपस्यन्दितेति । अङ्गविपर्ययाच्च लभ्याप्येषा प्रयोगे साहचर्यनियमख्यापनार्थं पुनर्निरूपिता । अस्मादप्रत्यालीढयोस्तु पादद्वयमपि स्थितसंस्थानं मध्यजीवित्व मद् वक्ष्यते मण्डलेन प्रयोजयेत् ।(१०-६६। स्यन्दितायास्तु नैवमिति शेषः । स्थानस्य स्थितिप्रधानता चार्यास्तु गतिप्रधानतेत्यपि विशेषः ॥२६॥

अथ समोत्सरितमत्तल्ली—तलसञ्चरयोगेन जङ्घास्वस्तिकाभ्यन्तरे पदान्यस्य तदैव च द्वितीयतलसञ्चरं करोति ततो घूर्णमानयोस्तयोः उपसर्पणमित्यन्ये । समः अविकृत. । स च सर्व रेचकम् तन् ऊर्ध्वं सरितः गतिमान् समोत्सरितः । मदनं मत् तं मदं तनोतीति मतत्, तस्य लयो गमनं यस्यामिति मतल्ली । सरितशब्दो हि गतौ इत्यस्मात्, मतल्लयपदे निष्पद्यते । मदेन समाप्तो सादेने च । मदन मत् । तनन तत् । लयनं लीः । सर इति प्रातिपदिकात् इतचि वा सरितशब्दः । सम् आ उत् सरित इत्यन्ये पठन्ति । मदेन यो न विकृतोऽनृत रक्षार्थं चान्यतः पलायते तस्य वै द्विधा गतिरिति मध्यमदविपर्ययं चारी सम्पद्यते ॥२७॥

---

१. KSS., NS. विवर्तेत ।
२. GOS पादस्य ।
३. KSS., NS. समोत्सारित ।

उभाभ्यामपि पादाभ्यां घूर्णमानोपसर्पणं ।
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्युदाहृता ॥२८॥
एता भौम्य[1] स्मृताश्चार्यो नियुद्धकरणाश्रया ।
आकाशकीर्णा चारीणां सम्प्रवक्ष्यामि लक्षणम् ॥२९॥

कुञ्चितं पादमुत्क्षिप्य पुरतः सम्प्रसारयेत् ।
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता ॥३०॥

ऊरुभ्यां वलनं कृत्वा कुञ्चितं पादमुद्धरेत् ।
पार्श्वे विनिक्षिपेच्चैनमपक्रान्ता तु सा स्मृता ॥३१॥

कुञ्चितं पादमुत्क्षिप्य पार्श्वेनोत्पतनं[3] न्यसेत् ।
उद्घट्टितेन पादेन पार्श्वक्रान्ता विधीयते ॥३२॥

---

अथ मत्तल्ली—पादाभ्यामिति भूमिश्लिष्टाग्रतलाभ्यामिति जङ्घास्वस्तिक-योगेनार्धंश्यश्रितभागाभ्यां घूर्णमानत्वेनापसर्पणाद्वा, अगाढमदविषया चारी मत्तल्ली ॥२८॥

नियुद्धकरणाश्रया इति । नियुद्धेऽस्त्रादिविधिद्वा एता, करणाङ्गहारेषु च नतो नाट्ये । स्मृता इत्यनेनोपवेदमवध्यत्वेन वेदोऽत्र प्रमाणमिति दर्शितं विनियोग-दिक्प्रदर्शनं चेद मन्तव्यम् ॥२९॥

अथातिक्रान्ता—"उत्क्षिप्ता यस्य पार्ष्णिरिति" (९-२७७) कुञ्चितं तद् द्वितीय-गुल्फक्षेत्रे कृत्वा किंचित् पुरत प्रसार्य प्रकृतिभेदेन चतुस्तालान्तरमुत्क्षिप्याग्रेण भूमौ निपात्यत इति गन्तव्यातिक्रमादतिक्रान्ता ॥३०॥

अथापक्रान्ता—ऊरुभ्यां वलनोपलक्षिता (बद्धा) पूर्वं कृत्वा तत पादमुद्धृत्य पार्श्वे क्षिपेदित्यपक्रमणादपक्रान्ता ॥३१॥

अथ पार्श्वक्रान्ता—कुञ्चितं पादं स्वपार्श्वेनोपरि नीत्वा भूमौ पार्ष्ण्या पातय-दिति पूर्वं कुञ्चनाद्धलादेवोद्घाटितत्वं भवति, तस्य हि लक्षणं "स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते" इति (९-२६६) । इयमेव पार्ष्णिचण्डपातेति प्रसिद्धा । अन्ये तु द्वितीयोरुक्षेत्र यावदुत्क्षिप्योद्घाटितेन पातयेदित्याहु ॥३२॥

---

१. KSS NS, भूम्य ।
२. KSS, NS, नियुक्त ।
३. NS, पार्श्वेस्यानर्गति । KSS. पार्श्वोत्पातोद्गति GOS जानुस्तनसम ।

कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् ।
द्वितीयं च क्रमात्[1] स्तब्धमूर्ध्वजानु[4] प्रकीर्तिता ॥३३॥

[2]कुञ्चितं पादमुत्क्षिप्य जानूर्ध्वं सम्प्रसारयेत् ।
पातयेच्चाग्रयोगेन सा सूची परिकीर्तिता ॥३४॥

पृष्ठतो ह्यञ्चितं कृत्वा पादमग्रतलेन तु ।
द्रुतं निपातयेद्भूमौ चारी नूपुरपादिका ॥३५॥

कुञ्चितं पादमुत्क्षिप्य[3]पार्श्वात्पार्श्वं तु दोलयेत् ।
पातयेदञ्चितं चैव दोलपादा तु सा स्मृता[4] ॥३६॥

कुञ्चितं पादमुत्क्षिप्य आक्षिप्य स्वञ्चितं [5]न्यसेत् ।
जङ्घास्वस्तिकसंयुक्ता चाक्षिप्ता[6] नाम सा स्मृता[7] ॥३७॥

---

अथोर्ध्वजानु—क्रमस्तब्धमिति यथा तस्योत्क्षेपस्तथास्य स्तब्धतेत्यर्थः ॥३३॥

अथ सूची—जानूर्ध्वं जानुपर्यन्ता जङ्घा प्रसारयेत् । यदि वा जानोरूर्ध्वमूरु-पर्यन्ता जङ्घा सकृत्प्रसार्याग्रयोगेन पातयेदिति । सूच्याकारत्वात् सूची ॥३४॥

अथ नूपुरपादिका—पृष्ठत इति "पार्ष्णिपार्श्वस्थिता भूमौ" इत्यञ्चितं (९-२७५) कृत्वा तु पृष्ठतः स्फिक्पार्ष्णिसंश्लेषपर्यन्तं नीत्वा स्वपार्श्वेऽग्रतलेनाञ्चिता जङ्घा पातयेदिति । नूपुराणां क्वणत्क्वणितिशब्दजननात् स्वरितार्थत्वमस्या भवति नूपुरयोजनं चेति तथोक्ता ॥३५॥

अथ दोलपादा—कुञ्चितेति दक्षिणक्षेत्रान्तं स्वपार्श्वं निर्णीय ततोऽपि स्वपार्श्वं दोलयेदिति दोलाकारेण नयेत्, तत स्वपार्श्वे पार्ष्ण्या निपातयेत् ॥३६॥

अथाक्षिप्ता—आक्षिप्येति । अग्रतस्त्रिताल्लोक्षेपादर्धमण्डलवत् पार्श्वान्तरं नीत्वा स्वस्तिकेन पार्ष्ण्या भुवि पातयेत् ॥३७॥

---

१. GOS क्रम ।
२. KSS does, not read this verse. NS. reads it after पृष्ठतो etc.
३. KSS, NS पार्श्वं ।
४. GOS, NS प्रकीर्तिता ।
५. NS व्याक्षिप्य KSS व्याक्षिप्यं चाञ्चितं ।
६ NS अक्षिप्ता KSS. त्वक्षिप्ता ।
७. KSS भवेत् ।

स्वस्तिकस्याग्रत पाद कुञ्चितस्तु[1] प्रसारित ।
निपतेदञ्चिताविद्ध[2] आविद्धा नाम सा स्मृता ॥३८॥

पादमाविद्धमावेष्ट्य समुत्क्षिप्य निपातयेत् ।
परिवृत्य द्वितीय च सोद्वृत्ता चार्युदाहृता ॥३६॥

पृष्ठतो वलितं पाद शिरोघृष्ट प्रसारयेत् ।
सर्वतो मण्डलाविद्ध विद्युद्भ्रान्ता तु सा स्मृता ॥४०॥

'पृष्ठ प्रसारित' पादो वलितोऽभ्यन्तरीकृत ।
पार्ष्णिप्रपतितश्चैव ह्यलाता सम्प्रकीर्तिता[4] ॥४१॥

कुञ्चित पादमुत्क्षिप्य त्र्यस्रमूरु विवर्तयेत् ।
कटिजानुविवर्त्ताच्च भुजङ्गत्रासिता भवेत् ॥४२॥

---

अथाविद्धा—विश्लिष्टजङ्घस्यैव स्वस्तिकस्य सव्यो कुञ्चित पाद प्रसारित तत आविद्धस्सन् स्वपार्श्वे द्वितोयपार्ष्णे क्षेत्रे पार्ष्ण्या पातित कार्य ॥३८॥

अथोद्वृत्ता—आविद्धमिति आविद्धचारीसम्बन्धिन कुञ्चितमित्यमनेन आविद्धायोपभूतेयमिति दर्शयति । आवेष्टन द्वितीयोरुक्षेत्रगपार्ष्णित्वम् । तमेव पादमुत्प्लुत्य भ्रमरक कृत्वा पातयेत् । ततो द्वितीयमित्यूर्ध्व वर्तमानत्वादुद्वृत्ता ॥३६॥

अथ विद्युद्भ्रान्ता—पृष्ठत ऊरुमूलादिति केचित् । उपाध्यायास्तु पृष्ठतः पार्श्वात् पश्चाद् भागे वलित कृत्वा शिर' सश्लेषात् तद्द्वारेण सर्वत उर्ध्वाधः पार्श्वेपु मण्डलवद् भ्रमित प्रसारयेदिति विद्युद्भ्रान्ता ॥ ४०॥

अथालाता – पूर्व पश्चाद्भागे प्रसारितस्ततो वलनेनाभ्यन्तरीकृतो द्वितीयोरुदेशाद्यभिमुखतल च नीत , तत स्वपार्श्वपार्ष्ण्या पातित इति अलातचक्राकृतिरलाता ॥४१॥

अथ भुजङ्गत्रासिता—द्वितीयोरुमूलक्षेत्राग्त कुञ्चितमुत्क्षिप्य कटिजानुनिवर्तनेन नितम्बसम्मुखपार्ष्णित्र्यस्रमूरु विवर्तयेत् । स्वपार्श्वगजानुरमुत्तानपादतल कुर्यादिति पादोपान्तभुजगभयभावितगतिसादृश्याद् भुजङ्गत्रासिता ॥४२॥

अथ हरिणप्लुता—अनिक्रान्तचार्युक्तकुञ्चित पादमुत्क्षिप्योत्प्लुत्य च तमेव

---

१. NS च ।

२. GOS ताविद्धमाविद्ध ।

३. NS. पृष्ठतः सर्वतः पादो वलिताऽभ्य... । GOS. पृष्ठप्रसारितः ।

४ KSS सा प्रकीर्तिता ।

अतिक्रान्तक्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
जङ्घाञ्चितोपरिक्षिप्ता सा ज्ञेया हरिणप्लुता[1] ॥४३॥

नूपुरं चरणं कृत्वा पुरतः सम्प्रसारयेत् ।
क्षिप्राविद्धकरणं दण्डपादा तु सा स्मृता ॥४४॥

अतिक्रान्तक्रमं कृत्वा त्रिकं तु परिवर्तयेत् ।
द्वितीयपादभ्रमणात्तलेन[2] भ्रमरी स्मृता ॥४५॥

आकाशिक्य स्मृता ह्येता ललिताङ्गक्रियात्मिकाः ।
धनु[3]र्वज्रासिशस्त्राणां प्रयोक्तव्या[4] प्रयोक्तृभिः ॥४६॥

अग्रगौ पृष्ठगौ[5] चापि [6]ह्यनुगौ चापि योगतः ।
पादयोस्तु द्विजा[7] हस्तौ कर्तव्यौ नाट्ययोक्तृभिः ॥४७॥

---

पातयेत् । तदनन्तरं द्वितीया जङ्घा अञ्चितपादा सती पृष्ठभागे पश्चाद्देशे क्षिप्ता कार्येति मृगप्लुतितुल्या, 'सुखि होदु' इत्यादौ विदूषकादेर्दृश्यते ॥४३॥

अथ दण्डपादा—नूपुरपादोक्तं कुञ्चितं पादं द्वितीयपार्ष्णिगं कृत्वाग्रतः प्रसारयेत्, कथं, क्षिप्रं कृत्वा तथा आविद्धकरणं, आविद्धस्वदेहक्षेपसम्मुखीकृत-जान्वग्रात् क्रिया यत्र । ऊरुजानुजङ्घानां स्तब्धत्वेन दण्डाकारत्वाद् दण्डपादा ॥४४॥

अथ भ्रमरी—अतिक्रान्तचार्युक्तं कुञ्चितं पादमुत्क्षिप्य भुजङ्गत्रासितवत् त्र्यश्रमूरुं विवर्त्य द्वितीयपादतलभ्रमणे त्रिकं परिवर्तयेदिति सर्वशरीरपरिवर्तनद्वारेण नैमिषभ्रमणाद् भ्रमरी ॥४५॥

इतिकर्तव्यतामेव विनियोगादिकं चासां दर्शयति—ललिताङ्गक्रियात्मिका इति धनुर्वज्रेत्यादि च ॥४६॥

अथ कायशोभां निरूपयन् व्यापारविनियोगं चारीणां दर्शयति—अग्रगा-वित्यादि । इदं तात्पर्यम्—इह कदाचिद्गते प्राधान्यं, कदाचिद्धस्तव्यापारस्य, कदाचिद् द्वयोः । आद्ये पक्षे पादविक्षेपस्यानुगौ तदनुसारिणौ तत्पश्चाद्गामिनौ च हस्तौ, द्वितीये हस्तव्यापारस्यानुसारेण पश्चाद्भावेन च पादौ, तृतीये द्वयोरपि तुल्यकालताविनियोगपारतन्त्र्येण च प्रवृत्तिः । योग औचित्यम् ॥४७॥

---

१. NS. हरिणीप्लुता ।
२. NS. चलने ।
३. KSS NS वज्रादि ।
४. NS योक्तव्याः ।
५. KSS. समगौ ।
६. KSS. Omits हि ।
७. KSS. द्विजहस्तौ ।

यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादस्य निर्गमं[1] ज्ञात्वा तयोपाङ्गानि योजयेत् ॥४८॥

पादचार्यां यथा पादो धरणीमेव गच्छति ।
एवं हस्तश्चरित्वा[2] तु कटिदेशं समाश्रयेत् ॥४९॥

एताश्चार्यो[3] मया प्रोक्ता ललिताङ्गक्रियात्मिका ।
स्थानान्यासां प्रवक्ष्यामि सर्वशस्त्रविमोक्षणे ॥५०॥

वैष्णवं समपादं च वैशाखं मण्डलं तथा ।
प्रत्यालीढं[4] तथालीढं स्थानान्येतानि षण् नृणाम् ॥५१॥

द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् ।
तयोः समस्थितस्त्वेकः त्र्यस्रः पक्षस्थितोऽपरः ॥५२॥

---

कायशोभायोजनायेह अग्रे चात्राध्याये चार्यं प्रस्तुता (१०-७३) इति तस्या धाम्य यदा भवति तदा योजना कीदृशी कार्येति स्पष्टयितुमाह—यतो हस्त इति । तयेति तेनैव प्रकारेण, उपाङ्गानि भ्रूनेत्रादीनि ॥४८॥

ननु हस्तस्य क्रियाया यदि पादस्य गतिक्रिया तर्हि तद्विश्रान्तौ हस्तस्य को वृत्तान्त इत्याशङ्क्याह— पादचार्यामिति समाप्तायामिति शेषः । एवकारोऽन्यसम्भावना निरस्यति । हस्त इति ॥४९॥

अर्धचन्द्रो नाट्ये, नृत्ते तु पक्षप्रद्योतौ पक्षवञ्चितावपि । पादस्य धरणीप्राप्तौ कीदृक् कायसन्निवेश इत्याशयेन स्थानकान्यभिधातुं पूर्वोपसंहारपूर्वकं प्रतिजानीते— एताश्चार्य इति । ललितत्वमङ्गस्य यत इयतीभिरेव इमा उत्तानत्वे । तावानेव गतिप्रकार इति यावत् । स्थानानि भावे करणेऽधिकरणे वा व्युत्पत्त्या कायसन्निवेशाश्चार्यो उच्यन्ते । सर्वशस्त्रविमोक्षण इति साधारणो विनियोग उक्त । आसामपि चारीणां पूर्वं गतिरूपत्व, गतेश्च पश्चाद्भाविनी स्थितिरिति भाव ॥५०॥

नृणामिति स्थानकानि तु निरूपयिष्यन्त इत्यर्थं ।५१। पक्षस्थित इति पार्श्वाभिमुखाङ्गुलि । त्र्यस्र इति किञ्चिदग्राभिमुख्यमस्पृशत् ।५१-५२। अञ्चिता कुटिला

---

१ NS निर्गतिं ।
२ KSS, NS हस्त चरित्वा ।
३. KSS एताश्चार्या ।
४ KSS प्रत्यालीढमथालीढ ।
५ NS, KSS त्र्यस्रपादस्थितोऽपर. ।

किञ्चिदञ्चितजङ्घं च सौष्ठवाङ्गपुरस्कृतम् ।
वैष्णवं स्थानमेतद्धि विष्णुरत्राधिदैवतम् ॥५३॥

स्थानेनानेन कर्तव्यः संलापस्तु स्वभावजः ।
नानाकार्यान्तरोपेतैर्नृभिरुत्तममध्यमैः ॥५४॥

[चक्रस्य मोक्षणे चैव धारणे धनुषस्तथा ।
धैर्यौदार्याङ्गलीलासु तथा क्रोधे प्रयोजयेत् ॥५५॥

इदमेव विपर्यस्तं प्रणयक्रोध इष्यते ।
उपालम्भकृते चैव [1]प्रणयोद्वेगयोस्तथा ॥५६॥

शङ्कासूयोग्रताचिन्तामतिस्मृतिषु चैव हि ।
दैन्ये चपलतायोगे गर्वाभीष्टेषु[2] अर्थितेषु ॥५७॥

शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोजितम् ।]
समपादे समौ पादौ तालमात्रान्तरस्थितौ ॥५८॥

स्वभावसौष्ठवोपेतौ ब्रह्मा चात्राधिदैवतम् ।
अनेन कार्यं स्थानेन विप्रमङ्गलधारणम् ॥५९॥

स्पर्शे पक्षिणां चैव वर[4] कौतुकमेव च ।
स्वस्थाना स्यन्दनस्थाना विमानस्थायिनामपि ॥६०॥

---

जानुतमनाग्वक्रा यत्र । सौष्ठवं मदङ्ग वदयते तेन पुरस्कृत पूजितम्, समपाने वा अङ्गं सौष्ठव पुरस्कृत प्रधानम् । हि यस्मात् विष्णुरत्राधिदैवतम् तस्माद्वैष्णवम् । तेन तस्य तादृशस्य वाग्मीप्रधानस्य सूत्रधारादे प्रयोगे स्थानकमिदम् । एवमुत्तरत्र मन्तव्यम् ।५३। एतदेवाह—स्थानेनानेनेति स्वभावज अनावेशित ।५४। विप्रमङ्गलेति विप्रैः क्रियमाण यत् मङ्गलाशीर्वचनादि तस्य धारणं प्रतीप्सन् ।५९। स्वस्थादीनामिद स्थानकम् ।६०। लिङ्गस्था शैवाद्या अनन्या ऊर्ध्वतायादिप्रतनाङ्गा।

१. NS रेवाधि ...।
२ KSS, NS प्रणयोद्विलस्तथा ।
३ NS मन्त्राधिवेषु ।
४. NS, परम् ।

सिद्धस्थाना वतस्थाना स्थानमेतत्तु कारयेत् ।
तालास्त्रयोऽर्धतालश्च पादयोरन्तरं भवेत् ॥६१॥

तालास्त्रोनर्धतालाश्च निषण्णोर्वं प्रकल्पयेद् ।
[1]समौ वक्षःस्थितौ चैव तत्र पादौ प्रयोजयेत् ॥६२॥

वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम् ।
स्थानेनानेन कर्तव्यमश्वानां वाहनं बुधैः ॥६३॥

व्यायामनिर्गमश्चैव स्थूलपक्षिनिरूपणम् ।
चापानां च समुत्क्षेपो व्यायामकरणे तथा ॥६४॥

रेचकेषु च कर्तव्यमिदमेव प्रयोक्तृभिः ।
ऐन्द्रे तु मण्डले पादौ चतुस्तालान्तरस्थितौ ॥६५॥

[1]समौ वक्षःस्थितौ चैव कटिजानू समौ तथा ।
धनुर्वज्रासिशस्त्राणि मण्डलेन प्रयोजयेत् ॥६६॥

वाहनं कुञ्जराणां[2] तु स्थूलपक्षिनिरूपणम् ।
अस्यैव दक्षिणं पादं पञ्च तालान् प्रसार्य तु ॥६७॥

आलीढं स्थानकं कुर्याद् रुद्रश्चात्राधिदैवतम् ।
अनेन कार्यं स्थानेन वीररौद्रकृतं तु यत् ॥६८॥

उत्तरोत्तरसञ्जल्पो रोषामर्षकृतस्तु यः ।
मल्लानां चैव संफेटः शत्रूणां च निरूपणम् ॥६९॥

---

।६१। स्थितस्याकाशदेश इत्याह—तालास्त्रयोऽर्धतालश्चेति सार्धतालत्रयादधो नमोदेश इत्यर्थः । निषण्णास्वलौ विधान्तौ तु तत्र पत्र मूर्ध्न्यपेक्षया ।६२। विशाख. स्कन्द । व्याख्यातानामेव युद्धादौ निर्गमनात् तेषामेव व्यायामादानपक्षिणोदनाक्रमेण ।६३-६४। ऐन्द्रे त्विति भेदं योजयन् मार्गतालद्वयान्तरमोदेशनिषण्णोर्ध्वमथापि सूचयति ।६५। मण्डलेदत्तविषयत्वान्मण्डलम् ।६६। अश्वानां वाहने वैशाखं, इदं तु हस्तिनां, तेभ्य स्थूलानामिति क्रमात् स्थूला॰ पक्षिणोऽत्र गरुडादयो मन्तव्याः ।

अस्यैवेति निषण्णोर्ध्व तथा स्थितस्य द्वयो सूचयति ।६७। आमपरालीढा दृष्टा भूमिर्येनेत्यालीढम् ।६८। सफेट संघर्षः ।६९।

---

१ NS वक्षः ।

२ KSS, NS वक्षः ।

३ NS कुञ्जराणां ।

तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम् ।
कुञ्चितं दक्षिणं कृत्वा वामं पादं प्रसार्य च ॥७०॥

आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम् ।
आलीढसहितं शस्त्रं प्रत्यालीढेन मोक्षयेत् ॥७१॥

नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः ।
न्यायास्त्वेव हि विज्ञेयाश्चत्वारः शस्त्रमोक्षणे ॥७२॥

भारतः सात्वतश्चैव वार्षगण्योऽथ कैशिकः ।
भारते तु कटीच्छेद्यं पादच्छेद्यं तु सात्वते ॥७३॥

वक्षो वार्षगण्ये तु शिरश्छेद्यं तु कैशिके ।
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारीसमुत्थितैः ॥७४॥

प्रविचार्यं प्रयोक्तव्यं नानाशस्त्रविमोक्षणे ।
न्यायाश्रितैरङ्गहारैर्न्यायाश्चैव समुत्थितैः ॥७५॥

यस्माद् युद्धानि वर्तन्ते[1] तस्मान् न्याया प्रकीर्तिताः ।
वामहस्ते विनिक्षिप्य खेटकं शस्त्रखेटकम् ॥७६॥

शस्त्रमादाय हस्तेन प्रविचारमथाचरेत् ।
प्रसार्य च करौ सम्यक् पुनराक्षिप्य[2] चैव हि ॥७७॥

---

आलीढपरिवर्तं इतीयदेव लक्षणं पूर्वमुक्तम्, तु पद इतिकर्तव्यतास्पष्टकरणार्थम् ।७०। कुञ्चितमिति प्रसारणविपरीत भूय उत्तानाकुञ्चितोऽत्र पादः ।७१। ननु प्रयोक्तृभि शस्त्रविमोक्ष कार्य इत्युक्तम् । तस्य (प्रयोक्तृभि. ? (न्यायास्यादि?) न्यायाश्चत्वारिति नामानुसारादेषां वृत्तिविभागे परिशेषता । भारतदया वार्षगण्य. ।७२। कटिच्छेद्य-मिति भावे कृत्य (कटीस्थानादिषु परस्य हन्तव्यत्वेतिक्रमेण चत्वारः ।७३। एभिरिति एभिर्न्यायैरुपलक्षिता. ।७४। शस्त्रमोक्षणाविषया प्रविचारा प्रकृष्टा. विचित्रा चारा गतिविशेषाः । (परिभ्रान्तिशब्दा ?) प्रयोक्तव्या चारीन्यायामकरण-अङ्गहारमण्डलात्मका. कार्या. ॥७५॥

न्यायशब्दस्यार्थं दर्शयति न्यायाश्रितैरिति न्यायेनाद्दौचित्येन यान्यङ्गो-दाहरणादि न्यायादेव च परवञ्चनस्वभावित्वात्मिकत्वात् प्रवर्तितानि तैः यत एतयोः क्रिया यतो न्यायाख्या ।७६। यथापि चेत्यनन्तर चेत्यर्थं ।७७। परिवेष्टनेन गमन

---

१. NS नीयन्ते ।
२ NS. पुनरावर्त्य ।

छेदकं भ्रामयेत् पश्चात् पार्श्वात् पार्श्वगतानि च ।
शिरःपरिगमश्चापि कार्यं शस्त्रेण योक्तृभिः ॥७८॥
'कपोलस्यान्तरे चापि' शस्त्रस्योद्वेष्टनं' तथा ।
पुनश्च खड्गहस्तेन ललितोद्वेष्टितेन' च ॥७९॥
खेटकेन च कर्तव्यं शिरःपरिगमो बुधैः ।
एष प्रचारः कर्तव्यो भारते शस्त्रमोक्षणे ॥८०॥
सात्वते च प्रवक्ष्यामि प्रविचारं यथाविधि ।
स एव प्रविचारस्तु खड्गखेटकयोः स्मृतः ॥८१॥
केवलं पृष्ठतः शस्त्रं कर्तव्यं खलु सात्वते ।
गतिश्च चार्यमार्गेऽपि सात्वतेन क्रमेण तु ॥८२॥
'शस्त्रखेटकयोश्चापि भ्रमणं संविधीयते ।
शिरःपरिगमस्तद्वच्छस्त्रस्येह भवेत्तथा' ॥८३॥
उरस्युद्वेष्टनं कार्यं शस्त्रस्याङ्गेऽथवा पुनः ।
भारते प्रविचारोऽत्र कर्तव्यः स तु कैशिके ॥८४॥
विभ्रमय्य' तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ।
प्रविचाराः प्रयोक्तव्या' ह्यायमेतेऽङ्गलीलया ॥८५॥
धनुर्वज्रासिशस्त्राणां प्रयोक्तव्या विमोक्षणे ।
न भेद्यं नापि तु च्छेद्यं न चापि रुधिरस्रुतिः ॥८६॥

---

नयन परिगम ।७८। मणिबन्धोद्वेष्टनेन शस्त्रस्योद्वेष्टनम् । उद्वेष्टितेनेति उद्वेष्टितेनेति ।७९। पृष्ठत इति खड्गस्य पश्चाद्भागे ।८२। युद्धप्रसङ्गेन सर्वं प्रयोगमाचक्षाणस्याशङ्क्याह — न भेद्यमिति मात्रे प्रत्यय ।८६। संज्ञामात्रेणेति । यथा परो जानाति मुख्येन हतोऽयमिति एवं निवृत्त्यादिविषयं निधाय नाट्यशास्त्रे संज्ञामात्रेणापि, तेन

---

१. NS कपोलस्यान्तरे ।
२ NS KSS चापि ।
३ NS घटन ।
४ NS वर्तितेन ।
५ NS खड्ग ।
६ NS शिरःपरिगमार्हस्तस्य शस्त्रस्य वचनम् ।
७. NS विभ्रमय्य ।
८ KSS. कर्तव्या ।
९ KSS वज्रादि ।

खड्गे प्रहरणे कार्यो न चापि व्यक्तघातनम् ।
[1]संज्ञामात्रेण कर्तव्यं शस्त्राणां मोक्षणं बुधैः ॥८७॥

अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः ।
अङ्गसौष्ठवसंयुक्तैरङ्गहारैर्विभूषितम् ॥८८॥

व्यायामं कारयेत् सम्यक् लयतालसमन्वितम् ।
सौष्ठवे हि प्रयत्नस्तु कार्यो व्यायामसेविभिः ॥८९॥

सौष्ठवे लक्षणं प्रोक्तं वर्तनाक्रमयोजितम् ।
शोभा सर्वैव नित्यं हि सौष्ठवं समुपाश्रिता ॥९०॥

अचञ्चलमकुब्जं च सन्न[2]गात्रमथापि[3] च ।
नात्युच्चं चलपादं[4] च सौष्ठवाङ्गं प्रयोजयेत् ॥९१॥

कटी कर्णसमा यत्र कूर्परांसशिरस्तथा[5] ।
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ॥९२॥

नहि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः ।
अत्र नित्यं प्रयत्नो हि विधेयो मध्यमोत्तमैः ॥९३॥

नाट्यं नृत्तं च सर्वं हि सौष्ठवे सम्प्रतिष्ठितम् ।
कटीनाभिचरौ[6] हस्तौ वक्षश्चैव समुन्नतम् ॥९४॥

---

मानुषिकमिति दर्शयति ।८७। अथवेति व्यवस्थितविकल्पः ।८८। अङ्गसौष्ठव प्रयुक्त तस्य सिद्धये परिकरमाह— व्यायाममिति । व्यायामोऽङ्गशिक्षाभ्यासस्थानमुपयोगकाल एव । एवं इत्यर्थः । चच्चत्पुटादिस्थानुसन्धेरङ्गमात्रादिनन्यालाम्य गृह्यते ।८९। सन्न इत्यविभ्रान्तिर्नगात्रं यस्य ।९१। कूर्परांसशिर इति प्राण्यङ्गत्वादेकवद्भाव । तथेति साम्येऽन्वयः ।९२। अधमानामत्र स्थानन्यत दर्शयति मध्यमोत्तमैरिति ।९३। सौष्ठव मध्यं तत्सर्वंसामान्यभूतं चातुरश्रमाह—कटीनाभिचराविति क्रमेण योजयेन च ।९४। मल्लयुद्धे यथाभ्यासस्तथा यत्नयुद्धेऽपि मर्माणि सन्तीति दर्शयति

---

1 NS. प्रहरणे KSS खड्गप्रहरणे कार्यं ।
2. NS गात्रं ।
3. NS सन्नगात्र मथैव च ।
4. NS. चपादं ।
5. KSS कूर्परांसशिरस्तथा ।
6 NS चरौ ।

वैष्णवं स्थानमित्यङ्ग[1] चतुरस्रमुदाहृतम् ।
परिमार्जनमादानं सन्धानं मोक्षणं तथा ॥९५॥

धनुषस्तु प्रयोक्तव्यं करणं तु चतुर्विधम् ।
[2]समार्जनं परामर्शं आदानं ग्रहणं क्रिया ॥९६॥

सन्धानं शरविन्यासो विक्षेपो मोक्षणं भवेत् ।
तैलाभ्यक्तेन गात्रेण यवागूमुदितेन च ॥९७॥

व्यायामं कारयेत् धीमान् भित्तावाकाशिके तथा ।
योग्याया मातृका भित्तिस्तस्माद्भित्तिं समाश्रयेत् ॥९८॥

भित्तौ प्रसारिताङ्गं तु व्यायामं कारयेन्नरम् ।
बलार्थं च निषेवेत नस्यं बस्तिविधिं तथा ॥९९॥

स्निग्धान्यन्नानि च तथा रसकं पानकं तथा ।
आहारेऽधिष्ठिता प्राणाः प्राणे योग्या प्रतिष्ठिता ॥१००॥

तस्माद्योग्याप्रसिद्ध्यर्थमाहारे यत्नवान् भवेत् ।
अशुद्धकाय [3]प्रवलान्तमतीवक्षुत्पिपासितम् ॥१०१॥

---

प्रमार्जनमिति प्रथमं धनुषो मार्जनं ततोऽपि बाणस्य ग्रहणं ततोऽपि शरस्य सन्धानं ततो मोक्षः ।९५। व्यायामे प्रस्तुते तदुपयोगि सौष्ठवं तत्प्रसङ्गागतं च धनुःकर्माभिधाय प्रयोगमेव व्यायाममाह - तैलाभ्यक्तेनेति । तैलमत्र तिलतैलम् । यवागूर्यवान्नम् ।९७। योग्याय विद्याविशेषसम्बन्धाय प्रभवतीति योग्या गुणनिका ।९८। नस्यं बस्तिविधिश्च तैलघृतादिभिः यथादेशकालप्रकृतीति मन्तव्यमायुर्वेदात् ।९९। रसकमिति मांसरसः सत्वेनेति सम्बन्धः । पानकानि च स्निग्धानीति सम्बन्धः । योग्या वा । निमित्तेनान्यानप्याह—आहाराधिष्ठिता इति ।१००। अशुद्धकायमित्यनेन वमनविरेचनविशुद्धगात्रस्य व्यायामेऽधिकार इति दर्शयति । अशुद्धगात्रस्य चाजीर्णयोगेऽपि । प्रवलान्तमिति अत्यश्रमादिना ।१०१। अचलैरिति यत्र यत्र नियाया योग्यो तत्र

---

१ NS स्यङ्गचतुरश्र…।

२. GOS प्रमार्जनं ।

३. NS प्रवलान्तमधीर ।

अतिपीतं तथा भुक्तं व्यायामं नैव कारयेत् ।
मधलैर्मधुरैर्गात्रं चतुरस्रेण वक्षसा ॥१०२॥
व्यायामं कारयेद्धीमान् सरसाङ्गक्रियात्मकम् ।
एव व्यायामसंयोगे कार्यश्चारीकृतो विधि ॥१०३॥
अत ऊर्ध्वं प्रवक्ष्यामि मण्डलानां विकल्पनम् ।

इति भरतीये नाट्यशास्त्रे चारीविधानो नाम
दशमोऽध्याय ।

---

तथैव प्राप्तपरिणतिभिरित्यर्थः । मधुरैरिति ललितैः ।।१०२।। अङ्गक्रिया अङ्गसिद्धि. । एवमित्युपसंहरन्नध्यायान्तरमासूत्रयति । विकल्पनं विचित्रतया कल्प्यन्ते येन प्रकारेण तं वक्ष्यामीति सूचयन्नङ्गानुसारायातचारीपरम्परात्मना मण्डलात्मनामसङ्गं चैव सूचयन्नुदाहरणमात्रार्थमध्यायान्तरमिति निरूपयतीति शिवम् ।१०३।

इत्थं दशममध्याय व्याचष्टे च समासत ।
शिवस्मृतिहृतापोऽपि परार्थं तु सतात्मज ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेद-
विवृतावभिनवभारत्यां चारीविकल्पो नाम दशमोऽध्याय. ।

# नाट्यशास्त्रम्

[1]अथ एकादशोऽध्यायः ।

एताश्चार्यो मया प्रोक्ता यथावच्छस्त्रमोक्षणे ।
चारीसंयोगजानीह मण्डलानि निबोधत ॥१॥
अतिक्रान्तं विचित्रं च तथा ललितसञ्चरम् ।
सूचीविद्धं [2]दण्डपादं विहृतालातके तथा ॥२॥
वामबन्धं सललितं क्रान्तञ्चाकाशगानि च ।
[3]मण्डलानि द्विजश्रेष्ठा [3] भूमिगानि निबोधत ॥३॥
भ्रमरास्कन्दिते स्यातामावर्तं च ततः परम् ।
समास्कन्दितमप्याहुरेडकाक्रीडितं तथा ॥४॥
अड्डितं शकटास्यं च तथाऽध्यर्धकमेव च ।
पिष्टकुट्टं च विज्ञेयं तथा चाषगतं पुनः ॥५॥
एतान्यपि दशोक्तानि भूमिगानीह नामतः ।
आद्यं पादं च जनितं कृत्वोद्वाहितमाचरेत् [4] ॥६॥
अलातं वामकं चैव पार्श्वक्रान्तं च दक्षिणम् ।
सूचीवामं पुनश्चैव पार्श्वक्रान्तं च दक्षिणम् ॥७॥

---

## अभिनवभारती

गतिमण्डलवैचित्र्यमासूत्रयति या सदा ।
तां नैकविधनिर्मात्रीं शक्तिं वन्दे महेशितुः ॥
स्वल्पेऽपि पाठ्ये न त्याज्यः कोऽप्यायो मया यत
विभोर्विश्वात्मनः स्तोत्रं मुख्यमन्यत्प्रसङ्गत ॥

शस्त्रमोक्षणे मण्डलानीति सम्बन्धः । इहेत्यस्मिन्नध्याये श्रुते श्रुतवद्दिव्यान्यपि निबोधत, । एषामियत् सामान्यलक्षणं चारीसंयोगजानीति ।

आकाशगतानां युद्धपरिक्रमेषु प्राधान्यात्पूर्वमुद्देश आकाशभूचारीप्राचुर्यं मण्डलेषु तथात्वम् ॥१-५॥ आद्यमिति दक्षिणम् । उद्वाहितमिति तयैकदेशेन शकटास्या

---

१ KSS. द्वादशोऽध्यायः ।
२. KSS. NS दण्डपादविहृत···
३. KSS NS do not read
४. KSS आद्यपादं नु त कृत्वा उद्वाहितमथाचरत् ।

पार्श्वक्रान्त [1]पुनश्चाद्यमतिक्रान्तं च वामकम् ।
परिच्छिन्नं च कर्त्तव्यं बाह्यभ्रमणकेन हि ॥१८॥
एष चारीप्रयोगस्तु कार्यो ललितसञ्चरे ।
सूचीवामपदं दद्यात् त्रिकञ्च परिवर्तयेत् ॥१९॥
पार्श्वक्रान्त पुनश्चाद्यो[2] वामोऽतिक्रान्त एव च ।
सूचीमाद्य पुनर्दद्यात् अतिक्रान्तञ्च वामकम् ॥२०॥
पार्श्वक्रान्त पुनश्चाद्य सूचीविद्धे तु मण्डले ।
आद्यस्तु[3] जनितो भूत्वा स च दण्डक्रमो भवेत् ॥२१॥
[4]वामसूचो पुनर्दद्यात् त्रिकञ्च परिवर्त्तयेत् ।
[4]उद्वृत्तो दक्षिणश्च स्यादलातश्चैव वामक ॥२२॥
पार्श्वक्रान्त पुनश्चाद्यो[5] भुजङ्गत्रासितस्तथा ।
अतिक्रान्त पुनर्वामो दण्डपादश्च दक्षिण ॥२३॥
वामसूचोत्रिकावर्त्तो दण्डपादे मण्डले ।
आद्य तु जनित कृत्वा तेनैव च निकुट्टकम्[6] ॥२४॥
[7]आस्पन्दित च वामेन[8] ह्युद्वृत्त दक्षिणेन च ।
अलात वामक पाद सूचीं दद्यात् दक्षिणम ॥२५॥
पार्श्वक्रान्तः पुनर्वाम आक्षिप्तो दक्षिणस्तथा ।
[9]समावर्त्य त्रिकं चैव दण्डपाद प्रसारयेत् ॥२६॥

दण्डक्रम इति दण्डपादाचारी (लक्ष्यते) ॥२१॥

त्रिकावर्तादिषु अन्ते पठितत्वात् पश्चिमाप्तिस्थानगतामेव भ्रमरीमाश्रित्य दण्डमण्डल दण्डपादाख्य तत्रेति सबन्ध । निकुट्टकमित्यनेन तलमकचरपादो लक्ष्यते ।२४। उद्वृत्त-मूरुद्वृत्तादिका चारीम् ।२५। समावर्तन सम्यगावर्तन सव्यापसव्यभ्रमरद्वयेन ॥२६॥

१. NS. पुनश्चाग्यो वामोऽतिक्रान्त एव च ।
२. KSS. NS. अन्यो ।
३. NS. तद्गतो ।
४. KSS. उद्वर्तो NS. तद्वृत्ता ।
५. KSS. अन्यो ।
६. KSS. NS निकुट्टनम् ।
७. KSS. NS आस्फन्दित ।
८ KSS. उद्धत्त NS ह्युत्तम्न ।
९. KSS. परिवृत्य ।

सूचीवामपदं दद्यात् त्रिकं च परिवर्तयेत् ।
भुजङ्गत्रासितश्चाद्यो वामोऽतिक्रान्त एव च ॥२७॥

एष चारीप्रयोगस्तु विहृते[1] मण्डले भवेत् ।
सूचीमाद्यक्रमं कृत्वा चापक्रान्तं च वामकम् ॥२८॥

[2]पार्श्वक्रान्तस्ततश्चाद्योऽप्यलातश्चैव वामकः ।
[3][भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ॥२९॥

षट्सत्यं सप्तसत्यं च ललितं पादविक्रमैः ।
अधिकुर्यादपक्रान्तमतिक्रान्तं च वामकम् ॥३०॥

अपक्रान्तः पुनश्चाद्यो वामोऽतिक्रान्त एव च ।
पादभ्रमरकश्च स्याल्ललिते तत्तु मण्डले ॥३१॥

सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।]
आद्यो दण्डक्रमश्चैव सूचीपादस्तु वामकः ॥३२॥

पार्श्वं त्रिकविवर्तश्च पार्श्वक्रान्तश्च दक्षिणः ।
आक्षिप्तं वामकं कुर्यात् दण्डपार्श्वं[4] च दक्षिणम् ॥३३॥

ऊरूद्वृत्तं च तेनैव कर्तव्यं दक्षिणेन तु ।
[5]सूचीवामपदं कृत्वा त्रिकं च परिवर्तयेत् ॥३४॥

अलातश्च भवेद्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामो [6]वामबधे तु मण्डले ॥३५॥

---

एताभिश्चारीभिः पर्यायेण षट्कृत्वः सप्तकृत्वो वा प्रयुक्ताभिः परिमण्डलं चतुर्दिक्कं भ्रान्त्वान्तरालिकैः पार्श्वैरपीदमिव कुर्यादिति मन्यते । तस्याच्छन्देनास्यावृत्तिर्लक्ष्यते ॥३०॥

---

१. NS विहृतं ।
२ NS पार्श्वक्रान्त पुनश्चाद्यो ह्यलात ।
३. इत प्रभृति KSS पुस्तके श्लोकद्वय नास्ति ।
४. KSS, NS पाद ।
५. NS. सूचीवामपदस्चैव KSS सूचीवामपद ।
६. NS. चार्यो ललितसञ्चर. । एष पादप्रचारस्तु ललिते मण्डले भवेत् ।

सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्त च वामकम् ।
पार्श्वक्रान्त पुनश्चाद्यो भुजङ्ग[1]त्रासित स च ॥३६॥

[2][अतिक्रान्त पुनर्वाम आक्षिप्तो दक्षिणस्तथा ।]
अतिक्रान्त पुनर्वाम ऊरुवृत्त[3]स्तथैव च ॥३७॥

अलातश्च पुनर्वामः पार्श्वक्रान्तश्च दक्षिण ।
सूचीवाम पुनर्दद्यादपक्रान्तस्तु दक्षिण ॥३८॥
अतिक्रान्त पुनर्वाम. कार्यो ललितसञ्ज्ञक ।
एव पादप्रसारस्तु ललिते मण्डले भवेत् ॥३९॥

सूचीमाद्यक्रम कृत्वा ह्यपक्रान्तश्च वामकम् ।
पार्श्वक्रान्तं पुनश्चाद्य वामपार्श्वक्रम तथा ॥४०॥
भ्रान्त्वा चारीभिरेताभि पर्यायेणाथ मण्डलम् ।
वामसूचीं ततो दद्यादपक्रान्त च दक्षिणम् ॥४१॥

स्वभावगमने ह्येतन्मण्डल सविधीयते ।
शान्तमेतत्तु विज्ञेय नामतो नाट्ययोक्तृभि ॥४२॥

एतान्याकाशगामीनि ज्ञेयान्येव दशैव तु ।
अत पर प्रवक्ष्यामि भौमानामिह[4] लक्षणम् ॥४३॥
[5]आद्यस्तु जनित कार्यो[6] वामश्चास्यन्दितो भवेत् ।
शकटास्य पुनश्चाद्यो वामश्चापि प्रसारित ॥४४॥

आद्यो भ्रमरकः कार्यस्त्रिकञ्च परिवर्तयेत् ।
[7]आस्कन्दित. पुनर्वाम शकटास्यश्च दक्षिण ॥४५॥

अतिक्रान्तस्तथैव विशेषण ललित सञ्चरतोऽन्यत एव मण्डलस्वरूपमेव नाम ।३१।
न चेति । एवैरथर्ध. ॥५१॥

---

१ KSS NS. त्रासित तथा ।
२ KSS. NS. do not read
३ KSS. NS वृत्त ।
४. NS अपि ।
५ KSS आद्यन्तु ।
६. KSS NS आस्कन्दितो ।
७ KSS. NS आक्रन्दित. ।

वाम पृष्ठापसर्पी च दद्यात् भ्रमरकं तया।
स एवास्पन्दित.[1] कार्यस्त्वेतद् भ्रमरमण्डलम् ॥४६॥

आद्यो भ्रमरक कार्यो वामश्चैवाड्डितो भवेत्।
[2][कार्यस्त्रिकविवर्तश्च शकटास्यश्च दक्षिणः ॥४७॥

उरद्वृत्त. स एव स्याद्वामश्चैवापसर्पित।
कार्यस्त्रिकविवर्तश्च दक्षिणः [3]स्पन्दितो भवेत् ॥४८॥

शकटास्यो भवेद्वामस्तदेवास्फोटम भवेत्।]
एतदास्पन्दित नाम व्यायामे युद्धमण्डलम्[4] ॥४९॥

[5]आद्यस्तु जनित कृत्वा वामश्चैव निकुट्टकम्[6]।
शकटास्य पुनश्चाद्य[7] उरद्वृत्त. स एव तु ॥५०॥

[8]पृष्ठापसर्पी वामश्च स च चाषगतिर्भवेत्।
[9]आस्पन्दित पुनर्वक्ष शकटास्यश्च वामकः ॥५१॥

आद्यो भ्रमरकश्चैव त्रिकज्च परिवर्तयेत्।
[10]पृष्ठापसर्पी वामश्चेत्यावर्तो मण्डले भवेत् ॥५२॥

समपाद बुध. कृत्वा स्थान हस्तौ प्रसारयेत्।
निरन्तरावूर्ध्वतलावावेष्टयोद्वेष्ट्य चैव हि ॥५३॥

कटीतटे विनिक्षिप्य [11]चाद्यमावर्तयेत् क्रमात्।
यथाक्रम पुनर्वाममावर्तेन प्रसारयेत् ॥५४॥

---

आस्फोटनमिति पादतलेन भूमिताडन युद्धेष्वास्फोटनमिति प्रसिद्धम् ॥६०॥

---

१. KSS. एवास्पन्दित.।
२. KSS does not read these verses
३ NS. स्पन्दितो।
४. NS मण्डले।
५ KSS. आद्यन्तु।
६ NS वामेन तु निकुट्टनम्।
७ KSS चान्य।
८ KSS NS पृष्ठापसर्पी।
९ NS आस्पन्दित पुन सव्य, KSS आस्पन्दित पुन सौम्य।
१० KSS, NS पृष्ठापसर्पी।
११. KSS., NS आद्यमावर्तयेत् क्रमम्।

चारया चालया भ्रान्त्वा पर्यायेणाथ मण्डलम् ।
समोत्सरितमेत[1]त्तु कार्यं व्यायाममण्डलम् ॥५५॥
पादैस्तु भूमिसयुक्तैः सूचीविद्धैस्तथैव च ।
एलकाक्रीडितैश्चैव [2]तूर्णस्त्रिकविवर्तितं ॥५६॥
सूचीविद्धापविद्धैश्च क्रमेणावृत्य मण्डलम् ।
एलकाक्रीडितं[4] विद्यात् खण्डमण्डलमञ्जितम् ॥५७॥
सव्यमुद्घट्टितं कृत्वा तेनैवावर्तमाचरेत् ।
[5]तेनैवास्कन्दितं कार्यं शकटास्यश्च वामकः ॥५८॥
आद्य पृष्ठापसर्पो[7] च स च चाषगतिर्भवेत् ।
[8][आड्डितश्च पुनर्वाम आद्यश्चैवापसर्पितः ॥५९॥

वामो भ्रमरकः कार्यं आद्य आस्कन्दितो भवेत् ।
तेनैवास्फोटनं कुर्यादेतदड्डितमण्डलम् ॥६०॥
आद्य तु जनितं कृत्वा तेनैव च निकुट्टकम् ।
स एव शकटास्यश्च वामश्चास्कन्दितो भवेत् ] ॥६१॥

विज्ञेयं शकटास्यन्तु व्यायामे युद्धमण्डलम् ।
पार्श्वश्च शकटास्यस्थं पर्यायेणाथ मण्डलम् ॥६२॥
आद्यस्तु जनितो भूत्वा स एवास्कन्दितो भवेत् ।
अपसर्पो पुनर्वाम शकटास्यश्च दक्षिणः ॥६३॥

---

यथान्योऽप्यर्थः । अतः परमपि मण्डलानि योजयेत् । कथमित्याह । समाः परस्पर योजनोचितावयवौ यत्र तत्रोहेनाप्युदाहरण दर्शयति समचारीप्रयोग इति समाना योग्यत्वेनाकरणीयत्वेन च चारीणां प्रयोगो यत्र । एवमनया दिशा बहूनि कल्पयेदित्याह आचार्यवृद्धपोषणम्यो भाग प्रयोगयोग्यो भवतीति ।६६।

---

१ GOS NS च जेय ।
२ KSS तूर्णं ।
३ NS विवर्तनम् ।
४ KSS उद्घटित ।
५ NS तेनैवावृत्त ।
६ KSS आस्कन्दित कार्यं ।
७ KSS पृष्ठापसर्पो ।
८ KSS does not read these verses NS reads वर्ड्डितं in place of अड्डित ।

भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
अध्यर्धमेतद्विज्ञेयं नियुद्धे चापि मण्डलम् ॥६४॥

सूचीमाविद्धमं कृत्वा ह्यपक्रान्तञ्च वामकम् ।
भुजङ्गत्रासितं[1]चाद्य एवमेव तु वामकः ॥६५॥

भुजङ्गत्रासितैर्भ्रान्त्वा[2] पादैरपि च मण्डलम् ।
पिष्टकुट्टं च विज्ञेयं[3] चारीभिर्मण्डलं बुधैः ॥६६॥

सर्वैस्स्थापनैः[4] पादं परिभ्राम्य तु मण्डलम् ।
एतच्चाषगतं विद्यान्नियुद्धे चापि मण्डलम्[6] ॥६७॥

नानाचारीसमुत्थानि मण्डलानि समासतः ।
एवमन्यानि परं चैव[7] समचारीणि योजयेत् ॥६८॥

समाचारीप्रयोगो यस्तन्मयं[8] नाम मण्डलम् ।
आचार्यबुद्ध्या तानीह कर्तव्यानि प्रयोक्तृभिः ॥६९॥

एतानि मण्डलानि समण्डलानि युद्धे नियुद्धे[9] च परिक्रमे च ।
लीलाङ्गमाधुर्यपुरस्कृतानि कार्याणि वाद्यानुगतानि तज्ज्ञैः ॥७०॥

इति भारतीये नाट्यशास्त्रे मण्डलविधानं नाम एकादशोऽध्यायः समाप्तः ।

---

खण्डानां प्राधान्यमपि दर्शयति खण्डानीति । वाद्येनानुगतानीति "गत्या वाद्यानुसारिण्या" (अ ४—२६२) इतिनृत्तविषयमुपाध्यायाद्धि वैपरीत्येन नाट्ये गतौ प्राधान्यमाह इति शिवम् ॥७१॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेदविवृताव-
भिनवभारत्यां मण्डलाध्याय एकादशः समाप्तः ।

---

१ KSS चाप्य एष एव ।
२. KSS चारैरपि ।
३. KSS नियुद्धे चारिमण्डलम् ।
४. KSS. चापगतं ।
५. NS परिक्रम्य ।
६ KSS चारिमण्डलम् ।
७ NS समचारी नियोजयेत् ।
८. NS नागमण्डलम् ।
९. NS. परिचङ्क्रमे च ।

ध्रुवायां ¹संप्रयुक्तायां पटे चैवापकर्षिते ।
कार्यः प्रवेशः पात्राणां नानार्थरससम्भवः ॥३॥

स्थानं तु वैष्णवं कृत्वा ह्युत्तमे मध्यमे तथा ।
समुन्नतं समं चैव चतुरस्रमुरस्तथा ॥४॥

बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ।
²ग्रीवाप्रदेशः कर्तव्यो ³मयूराञ्चितमस्तकः ॥५॥

---

च. कश्चिद्गृहीतानिर्देशं रत्यादिचित्तवृत्तिविशेषं तेनोपेतं कृत्वा, या ध्रुवा तया उत्तमादिप्रकृतीनां यथावेशनं बुद्धौ प्रवेशो यत्र तथा कृत्वा । एतदुक्तं भवति— हंसाद्युपमानमुखेन प्रकृतिविशेषं, चित्तवृत्तिविशेषं, उद्यानादिविशेषदेशावदय ध्रुवासु निबन्धनीयं ॥२॥

एवं ध्रुवायां प्रवृत्तायामेव लयां । पटेऽपकर्षिते यवनिकायामपसारितायां तदा सामाजिकानां नेपथ्यगृहादयमागत इति नटो निवर्तते । चकारात्तत्काले पुनरारोहणम् । ध्रुवाप्रवेशो लये मध्ये वर्णितया (वर्णितयेति कोहलेन प्रयोगवामनाद्युपदिष्टम्) शुष्काक्षरगानं कृत्वा, प्रवेश एव तथा समुचितस्थानकदृष्टिमुखरागादिभियुक्तं कर्तव्यो यथा सामाजिकानां भटित्येवान्विताभिधानन्येन मुख्यरसव्याप्तिरुदयते । प्रयोगे गीयमानग्रामरागाप्रगतैकगमकाकर्णने समग्रग्रामतत्त्वसंवेदनवत् ।

अन्ये तु नानार्थरस सम्भव इत्यत्र यथामार्गरसोपेतमिति पठन्ति । उभयतः दीपत्वेन व्याचक्षते—मार्गेषु चित्रादिषु या कला द्विमात्राचतुर्मात्राष्टमात्रेति मार्गेषु उच्यन्ते चालिप्तकादिषु गलावाक्षराणीति । यद्यपि पात्राणामध्रुवा अपि प्रवेशा दृश्यन्ते तथापि संभवमात्राभिधानमेतदुत्तममध्यमयोर्वा प्रस्तावादेवमुक्तम् तयोर्हि ता ध्रुवा प्रवेशास्तेऽपि वा चकारेण सगृहीता एव ॥३॥

स्थानमिति व्यर्थमङ्गिकमालम्बमानमिति वैष्णवं सममन्यत् समुन्नतम् ।४। स्वप्रवेश एव सन्ने अचले प्रसन्ने, नात्युत्क्षिप्ते अधो वा उपरि वा । अधोगामित्वं यत्नेन परिहार्यमिति श्लोकार्थमेव निश्चयितुं स्फुटमुपायमाह ग्रीवाप्रदेश इत्यादिना सार्धेन श्लोकद्वयेन । स्कन्धमयूरवदञ्चितं सुरूपं शिरो यत्र ।५। नाभिसंस्थ इति

---

1. KSS GOS सप्रवृत्ताया परे चैवापकर्षिता ।
2. NS. ग्रीवाप्रवेश ।
3. NS मयूराङ्कित ।

कर्णावष्टाङ्गुलस्थे च बाहुशीर्षे प्रयोजयेत् ।
उरस्स्थश्चापि चिबुक चतुरङ्गुलसंस्थितम् ॥६॥

हस्तौ तथैव कर्तव्यौ कटीनाभितटस्थितौ ।
दक्षिणो नाभिमध्यस्तु वाम कटितटस्थित ॥७॥

पादयोरन्तर कार्यं द्वौ तालावर्धमेव च ।
[1]पादोत्क्षेपस्तु कर्तव्य स्वप्रमाणविनिर्मित ॥८॥

चतुस्तालो द्वितालश्चा[2]प्येकस्तालस्तथैव च ।
चतुस्तालस्तु देवाना पार्थिवाना तथैव च ॥९॥

[3]द्वितालश्चैव मध्याना ताल स्त्रीनीचलिङ्गिनाम[4] ।
[चतुष्कलोऽथ द्विकलस्तथा ह्येककल स्मृत ] ॥१०॥

---

चातुरश्रप्रस्ताव सटकामुख , वाम इत्यर्धचन्द्र ।६-७। न चेदमुपविष्टस्थानकमपि तु गत्यान्तयो'चित्यात्तु स्थितस्थानकमेवेति दर्शयितुमाह—पादयोरन्तरमिति । "द्वौ तालावर्धतालश्च पादयोरन्तर भवेदिति (१०-५२) । मतस्थानकलक्षण सूचित तदेव कार्यं नान्यदुपवेशनादित्यर्थ । तत्र स्थानकानन्तर गतिमुपक्षिपति पादोत्क्षेप इति स युक्तस्तेन भाविलक्षणेन देशकाल परिच्छेदेन च कर्तव्य । स्वकरमानेन च ताल' पात्रस्येत्यर्थ ॥८॥

तत्र देशपरिच्छेद तावदाह् एकताल इति ताल प्रसारितमध्यमा ? (तर्जन्य)ङ्गुष्ठान्तर "ताल स्मृतो मध्यमया ?" इति । मुख्यात्मनाभिधाय स्थायिस्थानभूतोत्तमप्रकृतिविश्रान्तत्वात् प्रयोगजातस्य तदुपक्रम विनियोगमाह चतुस्तालस्त्विति । तुशब्दोऽप्यर्थे कदाचिदन्यथापि भावात् । तथाहादौ राज्ञो देवमद्युगस्यसभवमभावनापसारणयोनक: ॥९॥

---

१ NS. दृष्टा ।
२. NS. पादक्षेपस्तु ।
३ KSS omits अपि ।
४ KSS द्वितालेऽर्धश्चैव मध्याना तालश्चो च ।
५. NS. सङ्गिनाम् ।

चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् ।
तथा चैककलः पादो नीचानां सम्प्रकीर्तितः ॥११॥
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयत्रयम्[1] ।
यथाप्रकृतिनाट्यज्ञो गतिमेवं प्रयोजयेत् ॥१२॥
धैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्यमसम्मतानाम् ।
द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥१३॥
एष एव [2]तु विज्ञेयः कलातालल्ये विधिः ।
पुनर्गतिप्रचारस्य प्रयोगं शृणुतानघाः [3] ॥१४॥

---

स्त्रीणां नीचानां साहचर्यादिधमानामिति मन्तव्यम् । तेषां हि लिङ्गित्वादक्रमस्य किञ्चिन्न सम्भाव्येत । यथाक्रममिति नाट्यधर्मीकाममिदयं ॥१०॥

देशनियममुक्त्वा कालनियममप्यौत्सर्गिकं तावदाह— चतुष्कलो हीति । तथा चेति तेनोत्क्षेपेण यत्पादस्य पतनं तदुत्तमानां चतसृभिः कलाभिः यस्मात्तदर्धार्धक्रमेण मध्यमाधमयोः परिभाषितं इत्युत्सर्गतयेति भावः । तत्र गतिचतुष्टयं मार्गद्वयादि वक्ष्यते चतुरश्रार्धमार्गद्वयादौ क्रमेण चित्रादित्रयविनियोगात् । 'निमेषाः पञ्च मात्रा स्यात्" इति कला सामान्यलक्षणमस्य औत्सर्गिकं सर्वत्र ध्रुवकमार्गो मन्तव्यः । वीक्षेपादभिधाने तेन ध्रुवकमानेन चतुष्कलं पादपातः तथा चोत्तमपरिग्रहे द्विपदी कोहलेनोक्ता —

"स्यादुत्तमानां द्विपदी चतुर्युक्तसमन्विता ।
तत्रोत्क्षेपनिपाताभ्यां यस्मात्पादद्वयं भवेत् ॥"

लक्ष्यश्च इत्यमेव धिक् हि धि इति द्विपदीभागेन पादेन पादपातः । अत्र ध्रुवके चतस्रः कला भवन्ति । धिगडधिङ् इत्यस्य काले चलगपङ, इत्यादिना मवेतित । नहि व्यञ्जनकाल स्वरकालात्पृथक्, तत्र गुरोश्च प्रचलस्य स्वतलचडस्तद्विद्विमविमपुष्टमेवावधार्यते । तत्र हि धिगडिधि-इत्येवंरूपा लघु कला तस्मात्तिस्रो मात्राश्चतुर्थे गुर्वक्षरे द्वे मात्रे इति च मात्राः । सर्वत्र चैवं प्रकार समनन्तरग्रहणं विश्रान्त्यभावेन दुष्करं प्रयोग इति स्थानचेष्टाविश्रान्ति प्रवृत्तये मध्यगता विरामस्पर्शा मात्रा लक्ष्यविद्भिः प्रकल्पिता, तद्वशादुक्ताः तादृशा मात्रा चतुष्कलायां प्रतिभासन्त इत्यास्तां तावत् । इह विषमार्गेण चतुष्कलं पादपतनमिति न्याय (?) (नाय) लक्ष्यलक्षणयोमायाहत्वादपेक्ष्यते च ।

---

१ GOS, NS लय बुधः ।
२ KSS, NS. भूमि ज्ञेय ।
३. KSS गतिम् ।

'स्वभावात् समगतो कार्यं जानुकटीसमम् ।
युद्धचारीप्रयोगेषु 'जानुस्तनसमं न्यसेत् ॥१५॥

पार्श्वक्रान्तं सललितं पार्श्वयोश्चाभिवर्तयेत् ।
रङ्गकोणौ मुखं' गच्छेत् सम्यक् पञ्चपदानि च ॥१६॥

---

अथ लयकालनियमशेषमाह स्थितमिति विलम्बितम् । समवेदयेति प्रकृत्यादि भेदविभागेनेत्याह तमेव दर्शयति यथाप्रकृतीति धैर्यगाम्भीर्यविलम्बितमध्यद्रुतलय समतं सवेदन यथार्थ-मिथ्या-गौण-धैर्य-गाम्भीर्यादिकृत मन्तव्य न तु जाति-कालादिकृतम् ॥११॥

यथाप्रकृति । विदूषकस्य द्विजत्वेऽपि अविमलान्तस्त्वात् चञ्चलमनस्त्वादयणार्थेव रचित जात्यादि योजनीयम् । उत्तमस्याप्यन्यथाभाव स्वचित्तनुत्तमत्वेऽपि समीचीन-भाव इति । प्रचुरेण लोकप्रसिद्धमेवेदमुक्तमित्यर्थं न केवल प्रकृतितोऽवस्थाभेदा यावच्चित्तवृत्ति भेदेनेत्यभिप्रेत्याह सत्त्ववशेन च लयस्य योऽयम् । सत्त्व चित्तवृत्ति तेन सग्रामादावुत्तमस्यापि द्रुत शोकादावधमस्यापि विलम्बितम् ॥१३॥

अथैतदनुसारिण्या गत्युपयोगिन्या ध्रुवाया विधिरिति दर्शयति तद्विति । अत्र गत्यनुसारी तालविधि । अन्ये त्वन्यथेत्युक्त तामे । तस्मात्तस्य तत्सहित स कलातालसयः इति मध्यमपदलोपी समास । तेनायमर्थः— ध्रुवातालेऽपि गत्यनुसार्येव कलाविधिर्लयविधिश्च अत एवैतदनुसारेण भट्टलोल्लटशोङ्कुकादिभिर्नान्दीभङ्ग-विभङ्गविषये नान्दीविचारो विरचनसमस्तो ध्रुवातालानां विनियोग प्रपञ्चतो दूषित: । तत्तु ध्रुवाध्याये विचारयिष्याम इत्यास्ताम् ।

एव देशकालनियममुक्त प्रकृते योजयति पुनर्गतिप्रचारस्येति गतिषु । प्रचारो वैचित्र्य तस्य प्रयोग पुन शृणुतेति सबन्ध । सपदन्ता ह्यानुवृत्तेति भाव ॥१४॥

स्वभावादिवति । तुना विशेषद्योतकत्वेन मध्यस्थगतो चतुष्तालत्वमुक्त, स्वभाव गतो तु त्रितालत्व, शीघ्रगतो तु पञ्चतालत्वमपि कार्यमिति दर्शयति ।

तां गतिप्रचारपदनामाह—पार्श्वक्रान्तमित्यादि ।

"कुञ्चित पादमुत्क्षिप्य पार्श्वात्पातोत्थित न्यसेत्
उद्घट्टितेन पादेन पार्श्वक्रान्ता विधीयते" (१०-३२)

इति पार्श्वक्रान्ता चारी । रङ्गकोण पूर्वोत्तरम् ॥१६॥ द्वितीय वामदिगुत्तर पश्चिममिति । तत परमिति । कोणद्वयेऽभिदिशति । पूर्व रङ्गे धीरा पञ्चपादी

---

१ KSS स्वभावेस्तमगतो NS स्वभावे तुसमगतो ।
२ NS पुर स्तनसम न्यसेत् ।
३. KSS. मुखो ।

वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन तु ।
परिवृत्य द्वितीयं तु गच्छेत् कोणं ततः परम् ॥१७॥

तत्रापि वामवेधस्तु विक्षेपो [1]दक्षिणेन च ।
ततो भाण्डोन्मुखो गच्छेत् तान्येव [2]तु पदानि च ॥१८॥

एवं गतागतं कृत्वा पदानामिह[3] विंशतिम् ।
वामवेधं ततः कुर्यात् विक्षेपं दक्षिणस्य च ॥१९॥

रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः ।
[4]त्र्यस्रे त्रिकोणे चतुरस्ररङ्गे गतिप्रचारश्चतुरस्र एव ॥२०॥

यः समं सहितो गच्छेत्तत्र कार्यो लयाश्रयः ।
चतुष्कलोऽथ [5]द्विकलस्तथैवैककलः पुनः ॥२१॥

अथ मध्यमनीचैस्तु गच्छेद्यः परिवारितः ।
चतुष्कलमथार्धञ्च[6] तथा चैककलं पुनः ॥२२॥

---

व्याख्याता (अ ५.७३)। वेधः पार्ष्णिक्षेत्रे गुर्वीपादनिपातः। वामवेधमिति अन्तराविद्धमुक्त (नम्) पार्ष्णिनिद्धो यो निर्गम्य वा तत्रमध्यानन्यामुल्लध्यतामाह। एतच्च पञ्चपदीगमनं सर्वत्रोत्सर्गिकम् ।१७—१९। विशेषमप्याह रङ्गे विकृष्टे इति। भरतशब्देन उपचारतस्तद्विधा योनिसम्बन्धं सूचयते गतागतैरिति परिमितायां द्विधि पञ्चपदी गतागतेन नियमः एतत्रंव स्थाने द्वौ पार्श्वविक्षेपाविति मन्तव्यम्। विकृष्टायां च भूयो भूयः पञ्चपदी ।।२०।।

अत्रैव विषये विविधप्रमाणा पातरीतिः, तद्द्विस्वयद्विभङ्गत्रिभङ्गचतुर्भङ्गादयः प्राधान्येन। व्यामिश्रगतेरपि विशेष व्याचिख्यासुः समगतिमुपमहरति य समैरिति रिति। तथैवेति साम्येनेत्यर्थः ।२१। मिश्रगतिमाह अथेति। परिवारित इत्युत्तमत्वेन विवक्षितः इत्यर्थः। तेन देवादिवत् माध्यस्थ्योपमाणायामुत्तमप्रकृतावपि नाय विधि-रन्यस्यैव तत्र प्राधान्यात्। तदोत्तमादिपादपाते मध्यमस्य द्वौ, नीचादेरेक, उत्तमस्य चत्वार ।२२। अत्रैव च चतुष्कालादिविभागे निश्चयार्थं प्रश्नमुत्थापयितुमुप-

---

१. NS, KSS. वृक्षितेन।
२ KSS, NS विपदानि।
३ KSS, NS एक।
४. KSS त्र्यस्रे।
५ KSS द्विकलो भवेदेककलः।
६ NS मथोर्ध्वं च।

> दैत्यदानवयक्षाणां नृपपन्नगरक्षसाम् ।
> चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः ॥२३॥
>
> दिवौकसां तु सर्वेषां मध्यमा गतिरिष्यते ।
> तत्रापि[1] धोद्धता ये तु तेषां देवं समा गतिः ॥२४॥

ऋषय ऊचुः

> यदा मनुष्या राजानस्तेषां देवगतिः कथम् ।
> अत्रोच्यते कथं नैषा गती राज्ञां भविष्यति ॥२५॥
>
> इह प्रकृतयो दिव्या दिव्यमानुष्य एव च ।
> मानुष्य इति विज्ञेया नाट्यनृत्तक्रियां प्रति ॥२६॥
>
> [2]देवानां प्रकृतिर्दिव्या [3]राज्ञां वै दिव्यमानुषी ।
> या त्वन्या लोकविदिता मानुषी सा प्रकीर्तिता ॥२७॥
>
> [4]देवांशजास्तु राजानो वेदाध्यात्मसु कीर्तिता ।
> एवं देवानुकरणे दोषो ह्यत्र न विद्यते ॥२८॥
>
> अथ विधिस्तु कर्तव्यः स्वच्छन्दगमनं प्रति ।
> सम्भ्रमोत्पातरोषेषु प्रमाणं न विधीयते ॥२९॥

---

सहचारमुक्तमविशेषाभिधानमपि तदाह—दैत्यदानवेत्यादि ॥२३॥ सर्वेषामिति देवदूतादीनाम् । उद्धता ये इति मानतिप्रभृतय ॥२४॥

देवांशजा इति लोकपालांशविनिर्मिता राजान वेदेषु तथाध्यात्मशास्त्रेषु वेदान्तेषु । तेषामनेन प्राधान्यमुक्तम् । अनुकरणं देवादीनां वर्णनात् उक्तं च राजविद्या राजगुह्यमिति । देवानुकरणे नाट्यस्येत्यर्थः ॥२८॥ अथेति चतुस्ताल इत्यादि स्वच्छन्दगमनं स्वेच्छया गतिः सम्भ्रम आवेगः । उत्पातोऽत्योत्पातादि । प्रमाणमिति उक्तरूपमित्यर्थः ॥२९॥

---

१. NS योद्धता (गा ?)
२. KSS, NS. देवा हि ।
३. KSS, NS, राजानो ।
४. KSS, NS, देवान्वयजास्तु ।
५. NS देवानुकरणे देवो ।

सर्वासां प्रकृतीनां तु अवस्थान्तरसंश्रया ।
उत्तमाधममध्यानां गतिः कार्या प्रयोक्तृभिः ॥३०॥

¹चतुरर्धकलं वा स्यात् तदर्धकलमेव च ।
अवस्थान्तरमासाद्य कुर्याद् गतिविचेष्टितम् ॥३१॥

ज्येष्ठे चतुष्कलं ह्यत्र मध्यमे द्विकलं भवेत् ।
²[द्विकला चोत्तमे यत्र मध्ये त्वेककला भवेत्] ॥३२॥

³कलिकं मध्यमे यत्र नीचेष्वर्धकलं भवेत् ।
एवमर्धार्ध⁴हीनं तु कलानां संप्रयोजयेत् ॥३३॥

ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते भयान्विते ।
⁵विस्मिते चावहित्थे च तथौत्सुक्यसमन्विते ॥३४॥

---

सर्वासां प्रकृतीनां, गतिरिति कलालयनानाश्रिता । सर्वमेतदिति तु युक्तम् ॥३०॥

एतदेवास्य द्रढयति चतुरर्धमिति द्वे उत्तमस्य, एका मध्यमस्य, अर्धं नीचस्य; अवस्थान्तरवशात् । ३१-३२। नीचेष्वर्धकलं भवतीति अनेन कलानुसंभागो भरतमुनिना सूचितोऽयं लक्षणविदो वृत्तावारं द्रुतमाहुः, यथा पञ्चमाश्च उक्तनीत्या स्थानादि-विश्रान्तिपूर्वकं इति चतुर्धा स एव द्रुतो युक्त ॥३३॥

चतुष्कलादप्यधिकमस्तीति दर्शयति । ज्वरार्त इत्यादि । सर्वेन योजनीयो जातोऽस्तम्भ, अन्यथा ह्यस्य त्वरिततरा गतिर्वर्ण्यते । विस्मय इति तत्कृत-स्तम्भ इत्यर्थः । अवहित्थ इति कृतकधैर्याणाम्, कृतकं हि न सुश्लिष्टं भवतु पायेन इति । तत्राधिकमेव भवति तत एव हि कुशलाः कुर्वन्ता विदुः ।३४। अन्या-दरवशौत्सुक्येन सम्यगन्वितो स एव शृङ्गारभेदस्तत्रैव विप्रलम्भ इति यावत् । स्वच्छन्दगमन इति कार्येण विना क्रीडाचङ्क्रमणे । अधिकले इत्यधिशब्दोऽधिकार्थः । अधिकलामिति केचित् । साधिकं प्रकर्षेण चतुष्कलरूपेण सम्यक् चेतत् प्रस्तुतस्य विरामस्य च स्वरूपाधिगमे नालबोधः संख्याधिक्येन षडष्टकलादिविकल्पमधिकृत

---

१. KSS. चतुर्ष्वेकमलं वा स्यात् तयार्धकमेव च ।

२ KSS NS, do not read.

३ KSS, NS विकलं चोत्तमा यत्र नीचेष्वर्धकल भवेत् ।

४. KSS, NS. हानि तु कलानां ।

५. NS. विस्मये ।

शृङ्गारे चैव शोके च स्वच्छन्दगमने तथा।
गतिः स्थितलया कार्याधिकलान्तरपातिता[1] ॥३५॥

[2][पुनश्चिन्तान्विते चैव गति कार्या चतुष्कला।]
अस्वस्थकामिते चैव भये वित्रासिते तथा॥३६॥

आवेगे चैव हर्षे च [3]कार्यं यच्च त्वरान्वितम्।
अनिष्टश्रवणे चैव [4]क्षेपे चाद्भुतदर्शने ॥३७॥

---

कलान्तर परिमाण यथा तथाभूत पादपातो यस्याम्। अत एवैतत्पादपतनप्रसङ्ग-
विचारणाद्वक्ष्यति—

षट्कलन्तु न कर्तव्यं तथाष्टकलमेव च।
पादस्य पतन तज्ज्ञैः खेदन तद्भवेत् क्रिया ॥१२।१८४-१८५॥

अर्धैकद्विचतुष्कलमिति वचमा षडष्टकलयोर्निषेधेन च त्रिकलपञ्चकलादीनाम-
भावं सूचयति विषमाणां सपरिमाणोत्क्षेपणनिपातनायोगात्तामविदो हि साम्यमुप-
निषद्भूत तच्चात्र स्फुटयति ॥३५॥

एवमेतेषु षट्कलाद्यधिक मान तथा च नव कान्ताना परिश्रमे यत्र उत्क्ष-
नाद्यो लय कोहलादिभिरुक्तो यस्यानिविलम्बित कालावधि। एव कलाधिक्य-
मभिधाय न्यूनत्वमप्यस्तीत्याह अस्वस्थकामित इत्यादि। अस्वस्थे प्रच्छन्नकामिते हि
त्वराविषय ॥६६॥ अनिष्ट यदा बान्धवादे श्रुत तदा तदन्तिक द्रुतगमन, अद्भुत-
दर्शनविषये यदा क्षेप प्रक्षिप्तता, पुनरेतन्न दृश्यत इति। यस्मादिदमितमवश्यकर्तव्य
च तत्त्वरया क्रियते, त्वरयान्वित मुकार्यं अभिकथितमेवेति विज्ञेय त्वरान्वितमिति।
इयता यद्यपि सर्वं लभ्यते तथापि अविनष्टव्युत्पादनाय प्रपञ्च ॥३७॥ अत्ययोऽतिक्रमण
शीघ्रसंपादन प्रयोजनमस्य। अपराधोऽभिनेय शत्रोरस्य एव, यद्वा यस्यापराध
कृतो गुर्वादिस्ततश्च त्वरा गत मोऽपराद ॥३८॥ तथापि एतेष्विति एव प्रकारेष्वन्येषु

---

१ NS विकलान्तरपातिना।

२ KSS. does not read,

३. NS कार्यम्।

४. KSS कोपेऽप्यद्भुतदर्शने।

अपि चात्ययिके कार्ये [1]दूषिते शत्रुमार्गणे ।
अपराधानुसरणे श्वापदानुगतौ[2] तथा ॥३८॥

एतेष्वेव गतिः प्राज्ञो [3]विकला सम्प्रयोजयेत् ।
उत्तमाना गतिर्या तु न ता मध्येषु योजयेत् ॥३९॥

या गतिर्मध्यमाना तु न सा नीचेषु योजयेत् ।
गतिः शृङ्गारिणी कार्या [4]स्वस्थकामितसम्भवा ॥४०॥

दूती (दर्शन ?)शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
[5]सूचया चाप्यभिनयं कुर्यादर्थसमाश्रयम् ॥४१॥

---

मदादिष्वपीत्यर्थः विकलामिति विकलः कलापरिमाणो यस्याः सा कला अर्धकला-रहिता तुर्या यद्यपि, तथापि नादरणीया, यत त्रिभागषड्भागादिरपि तत्र भवति। अत एव सम्भ्रमोत्पातरोषेषु चतुरर्धकलमित्यनेन पौनरुक्त्यं तस्याविषयत्वादस्य तु विषमभागविषयत्वात् तथाहि मत्तगतौ शेखरकस्य खण्डकप्रयोगे हि "गहिद् घि" इत्येव रूपे मात्रा तृतीये, तृतीयस्य मात्रात्र च धग् इत्येक पात, रसुक इति द्वितीयो, धि इति तृतीयो, नचैषा साम्यम् । एतेन च कलानां साम्यं न्यूनाधिकतानिरूपणेन समविषमकलाभागभङ्गाभिधानेन गुरुलघुद्रुतप्लुतानां स्वीकारात्तद्वैचित्र्यम्। इयमपि भङ्गोपभङ्गविभङ्गप्रकारप्रस्तार सगर्भाना लक्ष्यसिद्धा भङ्गलयव्यवस्था प्रतिपाद्या-क्षरतदर्धादिरूपा च धाराबन्धादिविषया घातमार्गभेदेन प्रसिद्धा व्यवस्था स्फुटमेव दर्शिता मा भूदेव कालप्रमाण (कलापरिमाण ?) नियमाभिधानं गजस्नानीभूतमित्याह उत्तमाना गतिर्यास्त्विति । तुरेवार्थे अन्यक्रमेणैवेन्यर्थः. एतदुक्तं भवति—अनियमेन निर्दर्शितेन नियमो विप्लुत, तथापि कलाधिक्ये षट्कलोत्तमस्य तत्र मध्यमस्य चतुष्कलता, अधमस्य द्विकलता । यत्र न्यूनकलमुक्तं तत्राप्युत्तमस्यैका कला, मध्य-मस्यार्धकला, अधमस्य कलातुर्यभाग इति क्व विप्लव. ॥३९॥

एवं प्रकृतिभेदेन गतिमभिधाय रसविषयेण दर्शयितुं प्रथमं पुरुषार्थोपयोगित-सविषया निरूपयन् प्राधान्याच्च शृङ्गारे तावदाह गतिः शृङ्गारिणीत्यादि । स्वस्थ-

---

१. NS. तथा चैवारिमार्गणे ।
२. KSS. NS अनुगते ।
३. NS. द्विकला ।
४. KSS, NS स्वच्छ ।
५. NS. सूचयन् वा ।

[1]हृद्यैर्गन्धैस्तथा वस्त्रैरलङ्कारैश्च भूषित ।
नानापुष्पसुगन्धाभिर्मालाभि समलङ्कृत ॥४२॥

गच्छेत् सललितैः पादैर्[2]तिस्राऽतस्थितैस्तथा ।
तथा सौष्ठवसंयुक्तैर्लयतालवशानुगं [3] ॥४३॥

पादयोरनुगौ [4]हस्तौ नित्य कार्यौ प्रयोक्तृभि ।
[5][उत्क्षिप्य हस्त पातेन पादयोश्च विपर्ययात् ] ॥४४॥

प्रच्छन्नकामिते चैव गति भूयो निबोधत ।
विसर्जितजन. स्वस्तस्तथा दूतीसहायवान् ॥४५॥

निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषित ।
वेलासदृशवस्त्रश्च सह दूत्या प्रार्थस्तथा ॥४६॥

---

कामितमप्रच्छन्नम् ।४०। अर्धसमाप्त्ये मिद्धे सूचाया। पुनर्वचनं हृद्यस्य पदार्थस्य पर्यालोचन सातिशय चमत्कारकारीति निरूपयितु नत्र चर्वितचर्वणवत्पुन कश्चिदपि भागमत्यजन् सूचा शृङ्गारे कुर्यादिति दर्शयति । युद्धवीरादौ हि प्रधानानुसंधानमेवोचित तन्मध्यपतितता . कार्यान्तराणामपर्यालोचनीयत्वात्, पर्यालोचने आचार्यं मातुलान् भ्रातृन् स्वजनमित्यापाताापत्ते , यदपि चान्तरमार्गं स्पष्टत्वान् नृत्ते सूच्यान् परिहृतु मित्यर्थसमाश्रयणमित्यसत् ।४१। साऽपि हि निर्दिष्टा सूचैव हि कथ स्यात् सूचातोऽपि चान्तरङ्गमस्य प्रकृता गतिमाह नानति शोभनो गन्ध सुगन्ध । नानापुष्पै. सह सुगन्ध । अत्र समासान्ताभाव ।४२। सललितै सविलासै । सौष्ठवेनाङ्ग चातुरश्र्येण युक्त , लया विलम्बितादि, ताल चतुरश्रादि, भूय पुन समासेन उक्ताप्युत्तमगति पुनर्विशेषनया निरूप्यत इति भाव ।४३। प्रच्छन्न इत्वा कामित यत्र शृङ्गारे सागरिकादावपि वत्सराजादे तदन्यत्र मीनादाविव पोलस्त्यत्र नृत्तेषु ।४५। निर्वाणदीप । वेलातुल्यवस्त्र इति । तथाहि चन्द्रालोके सितवस्त्रावगुण्ठितो घनसारपरागपुञ्जमञ्जुगात्रो मुक्ताप्रायप्रचुराभरणो वस्त्रालुपलक्षणम् ।४६। प्रच्छन्न

---

१. NS. हृद्यैर्वस्त्रैस्तथा गन्धैर्धूपैश्चूर्णैश्च ।
२ KSS. अतित्रान्तोत्थितस्तथा ।
३. KSS. समन्वितः ।
४. NS. चापि हस्तौ कार्यौ ।
५ KSS., NS. do not read.

व्रजेत् प्रच्छन्नकामस्तु¹ पादैर्निःशब्दमन्दगैः ।
शब्दशङ्क्युत्सुकश्च स्यादवलोकनतत्पर ॥४७॥

वेपमानशरीरश्च शंकित प्रस्खलन् मुहुः ।
रसे रौद्रे तु वक्ष्यामि दैत्यरक्षोगणान् प्रति ॥४८॥

एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमा ।
नेपथ्यरौद्रो विज्ञेयस्त्वङ्गरौद्रस्तथैव च ॥४९॥

तथा स्वभावजश्चैव त्रिधा रौद्र प्रकल्पितः² ।
रुधिरक्लिन्नदेहो यो रुधिरार्द्रमुखस्तथा ॥५०॥

तथा पिशितहस्तश्च रौद्रो नेपथ्यजस्तु स ।
बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ॥५१॥

स्थूलकायस्तथा प्रांशुरङ्गरौद्र प्रकीर्तितः ।
रक्ताक्षः पिङ्गकेशश्च असितो विकृतस्वरः ॥५२॥
³रूक्षो निर्भर्त्सनपरो रौद्र सोऽयं स्वभावजः ।
चतुस्तालान्तरोत्क्षिप्तैः पादैस्तस्यान्तरपातितैः ॥५३॥

---

कामस्तु । एवंविधत्वाभिव्यक्तिविषयमेव गूढाभिधानं प्रच्छन्नकाममाह बाह्लाद्या । यस्य हि प्रस्तारो द्रुतलघुमिश्र । शब्दशङ्कीत्यादिना खण्डिता यथा सूचयन् मिथ-प्रयोगो गतिमत्राह । उत्सुक इत्यादिना कार्ये ।४७। वेपमान देहः । प्रस्खलन्नित्यादिना फलानुयोगात् । विप्रलम्भे तु शृङ्गारिण्येव करुणव्यामिश्रा गतिर्व्यभिचारि-त्वादिन्यभिप्रेत्य पृथङ् नोक्ता एव विषयाभिलाषप्राप्ते शृङ्गारे निधाय तद्रूप एव रौद्रे गतिं निरूपयति रौद्रे रसे त्विति ।४८। दैत्यादिप्रयुक्तं यदुक्तं तदनेनाधर्मेणेति शङ्काशमनमाह एक एवेति । ननु किं तेषां शोकेन विनापि गौरवम्, ओमिति ब्रूम । कथमिति चेत् रसाध्यायोक्तन्यायेनानुस्मारयितुमाह नेपथ्यरौद्र इत्यादि स्वभाव इत्यन्तम् । एकमेक एव रसस्तेषामिति कथितं, रसाध्याये चैतत्प्रपञ्चितम् ।४९-५२। चतुस्तालान्तरोत्क्षिप्तैरिति तालान्तरपातित्वं द्वितीयतालान्तराला-पेक्षयेति केचित् । उपाध्यायास्तु तालशब्देनात्र कालमानमुक्तं न तु देशमानं, तेन यावता कालेनोत्क्षेपस्ततो न्यूनेन पतनमिति । एतदनु प्रकृतिमध्यमारम्भत्व चाभिदधता विषमगतित्वमेषामनुज्ञातम् । तथा च कोहलमुक्तं कल्पातदर्थं दलसारेण नर्तनकोत्फुल्लकादिना गौडादौ परिक्रममाह ।५३। तद्विधा इति भीमसेनादयः । अनेन युद्धवीरेऽप्येषैव गतिरिति सूचयति ।

---

१. KSS वामंस्तु ।
२. KSS प्रकीर्तितः ।
३. KSS. रक्षो ।

गतिरेव प्रकर्तव्या तेषां ये चापि तद्विधा ।
बहुधा तु मही यत्र श्मशानरणकश्मला ॥५४॥
गतिं तत्र प्रयुञ्जीत बीभत्साभिनयं[1] प्रति ।
क्वचिदासन्नपतितैः विकृष्टपतितैः क्वचित् ॥५५॥
एलकाक्रीडितैः पादैस्तथ पर्यायपातितैः ।
तेषामेवानुगैर्हस्तैर्बीभत्से गतिरिष्यते[2] ॥५६॥
अथ वीरे च कर्तव्या पादविक्षेपसंयुता ।
[3]द्रुतप्रचाराधिष्ठाना नानाचारीसमाकुला ॥५७॥
पार्श्वक्रान्तद्रुताविद्धैः[4] सूचीविद्धैस्तथैव च ।
[5]कलाकालगतैः पादैरावेगे योजयेद् गतिम् ॥५८॥
उत्तमानामयं प्रायः प्रोक्तो गतिपरिक्रमः ।
मध्यानामधमानां च गतिं वक्ष्याम्यहं पुन ॥५९॥

---

अथ रौद्रप्राणोपयविवक्षामध्ये पुरुषार्थप्राणायाद्बीभत्साश्रयां गतिमाह बहुधा त्विति श्मशानरूपा युद्धपतितकबन्धप्रभृतिविरचिता अत एव रक्तेन कश्मला जुगुप्सिता ।५४। आसन्नपतितत्वेन मन्दाधंतुपातत्वादि विकृष्टपतितत्वेन बलासाधकत्वादि सूचयति ॥५५॥

अथ वीरगतिमाह—अथ वीरे चेति । विस्तारेण क्षेप इति स्वन्दितापरपर्यायस्य ग्रहणम् । तत्र च कलयाधकलादि च प्रयोग. । तत एवोल्लासनिश्चयस्य तालमप्रा-दुर्लक्ष्यविद । द्रुतेन प्रचारेणाधिष्ठानं गन्तव्य देशं यस्यामिति । महलपटोऽस्यादि विकृष्टपतितत्वं कलामात्रंलघुद्रुतप्रचार सूचितमनेन वीरे रौद्रे वा प्रवेगस्य स्वभाव-त्वात् ।५७। तत्र गतिमाह कलाकालगतैरिति । पादैरिति बहुवचनेन त्रय पादपाता गृह्यन्ते । तेन कलया कालेन च सन्निधानात् तालगतैव गतिरिति लघु पातन येषाम् । अपवैरो लघुरानो द्वावन्योऽन्यद्रुतपातौ कलामात्र च विश्राममित्यर्थम् ।५८। उत्कृष्ट-परिश्रम स बीभत्सोऽथ रौद्रयो श्रमः । उत्तमानामिति ननु बीभत्सरसे बीलमविपदतैव केनैतदुपदिष्ट भवन ? पुरुषार्थसाधन बीभत्स उत्तमेष्वेवैतदभिहितरसविषय व्यभिचारियोग तु ।५९। मध्यमानां गतिमाह विस्मय चेति । चकाराद्यवकाशो

---

१. KSS बीभत्सानुनय ।
२. KSS बीभत्सा NS बीभत्सगतिरुच्यते ।
३. KSS द्रुता प्रहृष्टाविद्धा ।
४ KSS तथाविद्धैः ।
५. KSS, NS- कालाकालगतैः ।

विस्मये चैव हर्षे च विक्षिप्तपदविक्रमान् ।
आगाद्य तु रसं हास्यमे[1]तच्चान्यच्च योजयेत् ॥६०॥

पुनश्च करुणे कार्या गति स्थिरपदैरथ ।
बाष्पाम्बुरुद्धनयन सन्नगात्रस्तथैव च ॥६१॥

उत्क्षिप्तपातितकरस्तथा सस्वनरोदन ।
[2]सम्छेसयाद्यर्थितकया प्रत्ययप्रियसश्रये ॥६२॥

एषा स्त्रीणा प्रयोक्तव्या नीचसत्वे तथैव च ।
उत्तमाना तु कर्त्तव्या [3]सधैर्या बाष्पसंगता ॥६३॥

नि:श्वासैरायतो[4]त्स्पृष्टैस्तथैवोर्ध्वनिरीक्षितैः ।
न तत्र सौष्ठवं कार्यं न प्रमाण तथाविधम् ॥६४॥

---

व्यभिचार्यन्तरैरेवेति । विक्षिप्त इवस्ततो गमो व्याकुलप्रायो लघुद्रनबहुल परिक्रमो यस्य तथा विस्मय एव व्यभिचारिरूपे स्थायिनि अद्भुतरसरूपे मध्यमानाम्[1] पुनरिति पुनर्ग्रहणादुत्तमानामद्भुतेऽपि स्वच्छन्दगतिरेव पूर्वोक्तेति दर्शयति । केवल तत्र विस्मयो वदन उत्पाद्यो मुखरागे । एतच्चेति पर हास्य स्मितातिहसितपर्यन्त, यदोत्तमाना स्वस्थगतिरेव तदा मध्याधमानान्तु अपहसितातिहसितयोर्विक्षिप्तगतिरेव । अन्या चेति तावद्विदूषकगतौ वक्ष्यमाणम्, एव प्रसङ्गाद् द्रुतहास्यमौग्ध्या गतिरभिहिता. करुणे तूच्यते पुनश्च करुण इति । "ज्वरार्ते च" इत्यादिश्लोकेन यद्यपि स्तोकगति-रुक्ता तथापि वक्ष्यन इति पुनः शब्दार्थ । स्थिरपदं विलम्बितं । ६१-६३।
*आयत दीर्घं कृत्वा उत्सृष्टैस्त्यक्तै; । ऊर्ध्वनिरीक्षणं देवोपालम्भसूचकं. । न प्रमाणं* तथाविधमिति नात्र सर्वथा प्रमाणाभाव अपि स्वनियन्त्रितमेव पातात्मकं प्रमाणम् । अत एवात्र विलम्बितलयेन लघुनयेन द्रुतलयेन गुरुप्लुतमात्रेण च विरामेण जम्भ-टिकाभ्यां लय कोहलेन दर्शित ।६४। उरस पात आनुगत्यात् करणप्रसङ्गात्प्रहारे

---

1. KSS, NS. मेतद्विचान्यादच ।
2. KSS, NS गच्छेतया विदकाय. प्रत्ययगतिसश्रये ।
3. KSS. सधैर्ये ।
4. KSS. उत्कृष्टै. ।

[1][मध्यानामपि सत्त्वानां गतिर्योज्या विधानतः] ।
इष्टपाते [2]हतोत्साहे शोक[3]व्याकुलचेतने ॥६५॥

नात्युत्क्षिप्तैः पदैर्गच्छेत् इष्टबन्धुनिपातने ।
गाढप्रहारे कार्या च शिथिलाङ्गभुजाश्रया ॥६६॥

विघूर्णितशरीरा च [4]गतिश्चूर्णपदैरथ ।
शीतेन चाभिभूतस्य वर्षेणाभिद्रुतस्य च ॥६७॥

गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृताश्रया ।
पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम् ॥६८॥

करौ वक्षसि निक्षिप्य कुब्जीभूतस्तथैव च ।
दन्तोष्ठस्फुरणं चैव चिबुकस्य प्रकम्पनम् ॥६९॥

कार्यं शनैश्च [6]कर्तव्यं शीताभिनयने गतौ ।
तथा भयानके चैव गतिः कार्या विचक्षणैः ॥७०॥

---

गतिमाह ।६५। घूर्णानि परिमितोत्क्षिप्तानि अधिकपतितानि पादानि तेनाद्यधिकानोऽन्तरान्तरं स्यात् । करुणे रसे दारिद्र्यमभिभवस्त्वत्र धीतः वर्णभेद सम्भाव्यत इति । तद्भयगतिमाह—शीतेन चेति ।६७। अर्थेस्यनेन मध्यमोत्तमानामनुभावन्यूनभावेन शीतादिगतिं सूचयति । तेषामिति पिण्डीकृतानां गात्राणां, चकारेण कम्पनं सङ्कोचनं समुच्चीयते एवकारेण सौष्ठवचातुरश्र्यादि निरस्यन् ।६८। कराविति कटिदान-कृतावित्यर्थः । गात्राणि पिण्डीकृत्य करौ वक्षसि च कृत्वा या गतिः लोके तस्याभिग-मने योज्य शीताभिनयस्तत्र कर्तव्यः प्रयोक्तृभिर्नर्तैर्गात्रकम्पनं कुब्जीभूतो देह इत्यादि कार्यमिति पदसङ्गतिः ।६९। एवं करुणे तत्प्रसङ्गेन चान्यत्रापि गतिमभिधाय भयानके कथयति ये चान्ये इति । येषामुत्तमत्व कुलाधीनत्वात् । अथ सत्त्वविहीना ।

---

१ KSS., NS. do not read.
२ KSS, NS. गतोत्साहे ।
३ NS. व्यामूढ ।
४. NS गतिस्तूर्ण ।
५. KSS, NS हृतस्य ।
६. KSS, गन्तव्य ।

स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ।
विस्फारिते चले नेत्रे विधुतं च शिरस्तथा ॥७१॥

भयमयुक्तया दृष्ट्या पार्श्वयोश्च विलोकनैः[१] ।
द्रुतैश्चूर्णपदैश्चैव बद्ध्वा हस्तं कपोतकम् ॥७२॥

प्रवेपितशरीरश्च शुष्कोष्ठस्खलितं व्रजेत् ।
एषानुकरणे कार्या तर्जने त्रासने तथा ॥७३॥

सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतं स्वरम्[३] ।
एषा स्त्रीणां प्रकर्तव्या नृणान्त्वाक्षिप्तविक्रमा ॥७४॥

क्वचिदाक्रम्यपतितैर्विकृष्टपतितैः क्वचित् ।
चलनाभीक्षितं पार्श्वयोरुपरि पातितैः ॥७५॥

एषामेवानुगैर्हस्तैरंगानि मंतेषु योजयेत् ।
वणिजां सचिवानां च गतिः कार्या स्वभावजा ॥७६॥

[कृत्वा नातिनते [४]हस्तमुत्तानकटकामुखम् ।
वामं चारालमुत्तानं कुर्यात्पार्श्वे स्तनान्तरे[५] ॥७७॥

न नितान्तं न च स्तब्धं न चापि परिवाहितम् ।
कृत्वा गात्रं तथा गच्छेत्तेन चैव क्रमेण तु] ॥७८॥

---

तथा— विस्फारिते विकासपूर्ण उत्तरे ।७१। द्रुतैरित्यनेन त्वरालयादि. कोहलोक्तम्. सूचित ।७२। अनुकरण इति शत्रोः पृष्ठत आगमनमित्यर्थः ।७३। नृणां पुनराक्षिप्तविक्रमं यत्तेनोपाहृतं मध्ये-मध्ये कुर्वर्थं यस्यामित्यर्थं । तेन मध्ये गुरु लघु पातपातः अपि । तदाह— क्वचिदाक्रान्तपतितैरित्यादि ।७४-७५।

अथ शान्तरसे गतिर्वक्तव्या न च प्राधान्येन तथा प्रयोगसौन्दर्यमावहति अतः तत्संबद्धारम्भा येषां वणिक्प्रभृतीनामस्ति "धीरप्रशान्ता वणिजः" इति वचनात् । मन्त्रिप्रभृतयोऽपि च शान्तरसप्रधानाः, ये नाटकादौ प्रसङ्गा भवन्ति तेषामुभयेषामपि गतिमाह—वणिजामित्यादिना । सचिवाः अमात्याः । स्वभावजत्वेन तत्र तत्रानाविष्ट-

---

१. KSS, विनाङ्कितैः ।
२. NS. पूर्णपदैः ।
३. NS विकृत एवम् KSS. विकृतस्वरम् ।
४ KSS. NS हस्तं मुक्तान्कटकामुखम् ।
५. KSS, NS. तदन्तरे ।

[1][अतिक्रान्तैः पदैर्विप्र द्वितालान्तरगामिभिः ।]
[2]यतीनां श्रमणानां च ये चान्ये तपसि स्थिताः ।७९।।

तेषां कार्या गतिर्या तु नैष्ठिकं व्रतमाश्रिताः[3]।
अलोलचक्षुश्च भवेद्युगमात्रनिरीक्षणः ।।८०।।

उपस्थितस्मृतिश्चैव गात्रं सर्वं विधाय च ।
अचञ्चलमनाश्चैव यथावल्लिङ्गमाश्रितः ।।८१।।

विनीतवेषश्च भवेत् कषायवसनस्तथा ।
प्रथमं समपादेन स्थित्वा स्थानेन वै बुधः ।।८२।।

हस्तं च चतुरं कृत्वा तथा चैकं प्रसारयेत्[4]।
प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगम् ।।८३।।

अनिषण्णेन गात्रेण गतिं गच्छेद् व्यतिक्रमात्[5]।
उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः ।।८४।।

एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् ।
तथा[6] व्रतानुगावस्था ह्यन्येषां लिङ्गिनां गतिः ।।८५।।

---

मेव रूपमाह ।७९-७९। नैष्ठिकमिति ब्रह्मचर्य एव प्रवर्तिन इत्यर्थ । युग चतुर्हस्तम् ।८०। उपस्थिता भवति संस्कारप्रबोधप्रभवा स्मृतिर्यस्य । शास्त्रवादर हि हृदय नियम्यमेषां वणिगमात्मयतिप्रवृत्तानां नियत विषय इति सन्धिवाक्यमेव नियमनिरूपणपर यस्य । लिङ्ग जपभस्म कौपीनादि ।८१। अन्यदिति नाममात्रवृत्तिषु तत्र तु विपर्यासो यथोचित द्रष्टव्य । तद्यथा, लोल चक्षु, मनश्चञ्चलम । लिङ्गं पुनर्जटादि भवति । एवमन्यदुन्नेयम् ।८२-८४। व्रतानुगत स्फुटयति विभाग्या चेति । उन्मत्तादिव्रतं हि श्रूयते । आगमेषु तत्तद्विलिङ्गियमेव गतिरित्यर्थ ।।८५।।

---

१ KSS NS do not read
२ NS यतीनां चैव सर्वेषां ।
३. NS आस्थिताः ।
४ KSS युगमात्र···।
५ KSS तथालिङ्गं समाश्रितः ।
६. KSS प्रयोजयेत् ।
७ KSS अतिक्रमात् ।
८ KSS, NS तथा व्रतानुगा च स्यात् ।

विभ्रान्ता वाप्युदात्ता वा विभ्रान्तनिभृताऽपि वा ।
शकटास्यस्थितैः पादैरतिक्रान्तैस्तथैव च ॥८६॥

कार्या पाशुपतानां च [1]गतिरुद्धतगामिनी ।
अन्धकारेऽथ याने[2] च गतिः कार्या प्रयोक्तृभिः ॥८७॥

भूमौ विसर्पितैः पादैर्हस्तैर्मार्गप्रदर्शिभिः[3] ।
[4]रथस्थस्यापि कर्तव्या गतिश्[5]चूर्णपदैरथ ॥८८॥

समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत् ।
धनुर्गृहीत्वा चैकेन तथा चैकेन कूबरम् ॥८९॥

सूतश्चास्य भवेदेवं प्रतोदप्रग्रहाकुलः ।
वाहनानि विचित्राणि कर्तव्यानि विभागशः ॥९०॥

---

कमण्डलुरुत्क्रान्त कृत्वा पति पाशुपताना परमेश्वरव्रतधारिणा गतिरत्युदात्ते-त्यर्थं यदि वा परमयोग्यवस्थाया नाकुलदर्शनप्रतिपन्नानामुन्मत्तव्रतमप्यस्ति, तद्विधमेवो-द्भ्रान्तत्वं गतौ । एव रसान्तरसङ्कृतिरुक्ता । यच्चान्यै रौद्रानन्तर शान्तरसाभि-प्रायेण पठित ।

"रूपादिविषनिराशस्य परोपायविचिन्तय ।
चतुष्कलैर्द्विपातैश्च पादैर्भ्रान्तगतिं व्रजेत् ॥ इति

तदनर्थमेव, एतत् ग्रन्थे पुनरुक्तमपुष्कलार्थं, पुस्तके क्व दृष्टमिति स्वकल्पित-मेवेत्युपेक्ष्यम् ॥८६॥

एव रसानुसारेण गतिमुक्त्वा देशानुसारेणाप्याह । अन्धकार इति अन्धत्वेन गमन इति ।८७। विसर्पितैरुत्क्षेपणशून्यै मार्गप्रदर्शिभि मार्गान्वेषणपरैरित्यर्थं । कर्तव्या गतिरिति च्छेद तदाह चूर्णपदै', चूर्णपदैरित्यनेन खण्डधारालय द्रुतबहुल गुर्वन्त कोहलोक्त सूचयति ।८८। समपादेन स्थानकेन रथेन गति, यस्मिन् देशे त व्रजेत् रथविशिष्टा वा गति । मामाभ्यके अपसंकरससारिमका साऽत्र इति । कूबर युगन्धर प्रतोद' क्षेपणक:, प्रग्रहो वल्गा ।८९। वाहनानि रथ्यानि तानि, प्रकृति-विभागोचित्येन विचित्राणि तुरगबलीवर्दखरोष्ट्रकानि चित्राणि लिखितानि । अस्य सूतस्यैव कर्तव्यानि तच्चित्रपटं सूतस्यैव हस्ते आवर्जयेदिति यावत् ।९०। चूर्णपदाना

---

१ KSS गतिर्द्भ्रान्त॰ ।
२. KSS NS अन्धयाने ।
३ मार्गं प्रदर्शितैः ।
४ KSS अथस्तस्यापि ।
५ NS तूर्णपदैः ।

द्रुतैश्चूर्णपदैश्चैव गन्तव्यं रङ्गमण्डले ।
विमानस्थस्य कर्तव्या ह्येवं [1]स्यन्दिनो गति ॥६१॥

[2]आरोढुमुद्वहेद् गात्रं किञ्चित् स्यादूर्ध्वमुत्थितम् ।
अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम् ॥६२॥

अधोऽवलोकनैश्चैव मण्डलावर्तनेन च ।
आकाशगमने चैव कर्तव्या नाट्ययोक्तृभि ॥६३॥

[3][स्थानेन समपादेन तथा चूर्णपदैरपि ।]
व्योम्नश्चावतरेद्यस्तु तस्यैतां कारयेत् गतिम् ॥६४॥

[4]ऋज्वायतोन्नतनतं कुटिलावर्तितं च यत् ।
भ्रश्यतश्च तथाकाशादपविद्धभुजा गति ॥६५॥

विकीर्णवसना चैव तथा नुगतलोचना ।
प्रासादद्रुमशैलेषु नदीनिम्नोन्नतेषु च ॥६६॥

---

गतिविशेषनिरूपणाय पुनर्ग्रहणं द्रुतैरिति । रङ्गमण्डल इत्यनेनेदमाह—यथा वस्तुतोऽसौ रङ्गमण्डल एव गतिक्रियां करोति तथात्र सर्वम् । नचिरम् नटपादैनि कर्तव्यं तत्रानुगतपदमात्रमेव, येन रथो याति प्रतिभाति एव सर्वत्र । अत एवाह विमानस्थस्यापीति । दिव्यस्याकाशगामिनोऽपि पुष्पकादिरित्यर्थ ॥६१॥ अथ रथप्रसङ्गादुद्धत क्रियान्तरमप्याह आरोढुमिति । उद्वहेदूर्ध्वं गात्रम् । वैपरीत्येन अधोमुखत्वेन गात्राधो-नयनम् चेदर्थः ॥६२॥ अथाकाशगमनि विमानप्रसङ्गादाह—अधोऽवलोकनैरिति । मण्ड-लावर्तं परिवर्तनमनितिरिति केचित् ।

आकाशगामिनां शरीरमण्डलानां पुन पुनरावर्तनमिति तदाख्याया ॥६३॥ एतामिति वक्ष्यमाणां चारीमेवाद्याचार्यो नटे ॥६४॥ ऋज्विति मार्गे गतिरङ्गं । अत एवायतैरङ्गैरक्षिप्तपातितैः, कुटिलया गत्या आवर्तितैः अङ्गैः उन्नतनतैरित्यर्थ पठन्ति, उत्क्षेपणकाल उन्नतं पातनकाले तु नतैरिति व्याख्यान ।

भ्रश्यत इत्यबुद्धिपूर्वकं पतत इत्यर्थ । अपविद्धो विक्षिप्ताकारभुजो यस्याम् ॥६५॥ अर्थवशादिति स्फुटयति अवतरणमिति । तद्दर्शयति नन शरीर

---

1 KSS स्पन्दिनो ।
2 KSS, NS. आरूढ ।
3 KSS, NS do not read
4 KSS, NS. ऋज्वायतोऽनुन्नतनैः ।

आरोहणावतरणं कार्यमर्थवशाद् बुधैः ।
प्रासादारोहणं कार्यमतिक्रान्तैः पदैस्तु ॥९७॥
उद्वाह्य गात्रं पादञ्च [1]सोपाने निक्षिपेन्नरः ।
[2]तथावतरणञ्चैव गात्रमानम्य रेचयेत् ॥९८॥
[3]प्रासादे यन्मया प्रोक्तं प्रतारः केवलो भवेत् ।
किञ्चिन्नतापकाया तु प्रतारे गतिरिष्यते ॥९९॥
जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् ।
तोयेल्पे वस्त्रोत्कर्षः प्राज्ये पाणिविकर्षणैः ॥१००॥
प्रसार्य [4]बाहुमेकैकं मुहुर्वारिविकर्षणं ।
तिर्यक् प्रसारिता चैव [5]ह्रियमाणा च वारिणा ॥१०१॥
अतोपाङ्गाकुलायुत[6]वदना गतिरिष्यते ।
नौस्थस्यापि प्रयोक्तव्या [7]द्रुतं चूर्णपदैर्गतिः ॥१०२॥
अतिक्रान्तेन पादेन द्वितीयेनाञ्चितेन च ।
प्रासादारोहणे[8] यत्तु तदेवाद्रिषु कारयेत् ॥१०३॥

प्रयोगेन रेचयेत् ।९७-९८। प्रतार इति एतत्प्रकार व्याचष्टे । जलप्रमाणापेक्षा द्विविधेति । ततस्फुटयति तोयेऽल्प इति । उत्कर्षं ऊर्ध्वं नयनं, प्राज्ये भूयसि जले च प्रचारस्तत्र पाणिविचित्रकर्षणेन पताकमर्धचन्द्राधिकादिनोपलक्षितगतिरिति सम्बन्ध ।९९-१००। अबुद्धिपूर्वकन्तु जलेन नीयमानस्य गतिमाह प्रसार्येति । एकैकमिति पर्यायेणेत्यर्थ ।१०१। अतोपेऽङ्गे आकुलत्व यस्या गतौ तथा आप्लुतमुच्यते तिर्यक् महद्दुद्वाहितं तुलयेत् । जवनत्वाच्चैव भवति । कैश्चित्तु पर्यायश पार्श्वत्वमुक्तं, तदसत् । नन्विहापि एतत् बुद्धिपूर्वके च जलप्रतरणे तत्स्यात्, सत्यमिह ।१०१। जलप्रसङ्गात् नौगतिमाह—नौस्थस्येति ।१०२। एवं प्रसङ्गान्नौगतिमुक्त्वा प्रकृतमेवारोहणमनुमन्यते । प्रासादारोहण इति ।१०३। ननु वृक्षप्रासादादि तत्र किं रङ्गमण्डले दर्शनम्-

---

1. KSS, NS व्यमेत्सोपानपङ्क्तिषु
2. NS तथावतरणं चैव गात्रमस्यैव कारयेत् ।
3. NS प्रसादे यन्मया प्रोक्तं प्रतारः नवलो भवेत् ।
4. KSS NS बाहू ।
5. KSS, NS ह्रियमाणया।
6. KSS पुरवदना ।
7. KSS गतिश्चूर्णपदैः । NS द्रुतैश्चूर्णे ।
8. KSS. रोहणं ।

[1]केवलमूर्ध्वनिक्षेपमाविध्यवङ्ग भवेदथ ।
द्रुमे चारोहणं कार्यमतिक्रान्तं स्थितं[2] पदैः ॥१०४॥

सूचीविद्धं रपक्रान्तैः पार्श्वक्रान्तैस्तथैव च ।
एतदेवावतरण सरित्स्वपि नियोजयेत् ॥१०५॥

अनेनैव विधानेन कर्तव्य गतिचेष्टितम् ।
संज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम् ॥१०६॥

कस्मान्मृत[3] इति प्रोक्ते किं कर्तव्य प्रयोक्तृभिः ।
अङ्कुशग्रहणान्नाग खलीनग्रहणाद्धयम् ॥१०७॥

प्रग्रहग्रहणाद्यानमेवमेवापरेष्वपि ।
अश्वयाने गति कार्या वैशाखस्थानकेन तु ॥१०८॥

[4]यथा चूर्णपदैश्चित्रैरध्यर्धुपरि पातितैः ।
पन्नगाना गति कार्या पादै स्वस्तिकसंज्ञितैः ॥१०९॥

पार्श्वक्रान्त पद कुर्यात् स्वस्तिक रेचयेदिह ।
विटस्यापि तु कर्तव्या गतिर्ललितविक्रमा ॥११०॥
पादैराकुञ्चितैः किञ्चित् तालाभ्यन्तरपातितैः ।
[5]स्वसौष्ठवसमायुक्तो तथा हस्तौ पदानुगौ ॥१११॥

---

पटादिन्यायेन दर्शनीय, नेत्याह संज्ञामात्रेणेति । संज्ञा उवनरूपारोहणाद्यभिनय ।४।५।६।

प्रसङ्गादन्यत्राप्यभिनय दर्शयति । अङ्कुशग्रहणादित्यादि । तेन चित्रपटादि-वियोगेऽपि रथगमनाद्यभिनयन न युक्तम् । सौन्दर्यात्तु तत्करणमपि भवत्विति भाव ।७। स्वस्तिकस्युर्नरित्युक्तमेव विभजति पार्श्वक्रान्तमिति । एव देशापेक्षया गतिरुक्ता । नागादिप्रसङ्गात् सर्पगतिरपि ।६।

अथावस्थाभेदेन गति निरूपयन् विटावस्थाया तावदाह विटस्यापि चेति ।१०। स्व प्रकृत्युचित स्वसौष्ठवम् ।११। चञ्चुरमिति तन्नेपथ्योचिता वृत्ति तदिच्छयारमन

---

१ KSS, NS केवल मूर्धनि क्षेप ।
२ KSS, NS. अतिक्रान्तोत्थिते ।
३ KSS., NS. नृत्त ।
४. NS तथा तूर्णपदं ।
५. KSS सौष्ठव ।

समुद्वहनभूयिष्ठा मदोत्क्षिप्ततरक्रमा ।
विष्कम्भगामी च भवेन्नि श्वासबहुलस्तथा ॥१२०॥

अधमस्त्वेवाभिभूतश्च व्रजेद्[1]घूर्णपदस्तथा ।
मत्तानां तु गति कार्या मदे तरुणमध्यमे ॥१२१॥

वामदक्षिणपादाभ्यां घूर्णमानापसर्पणैः ।
अवकृष्टे पदे चैव ह्यनवस्थितपादिका ॥१२२॥

विघूर्णितशरीरश्च[2] करैः प्रस्खलितैस्तथा ।
उन्मत्तस्यापि कर्तव्या [3]गतिस्त्वनियतक्रमा ॥१२३॥

बहुचारीसमायुक्ता लोकानुकरणाश्रया ।
रूक्षस्फुटितकेशश्च रजोध्वस्ततनुस्तथा ॥१२४॥

अनिमित्तप्रकथनो बहुभाषी विकारवान् ।
[गायत्यकस्माद्धसति सङ्गे चापि न सज्जते ॥१२५॥
नृत्यत्यपि च संहृष्टो वादयत्यपि वा पुनः ।
कदाचिद्धावति जवात् कदाचिदवतिष्ठते ॥१२६॥
कदाचिदुपविष्टस्तु शयानः स्यात् कदाचन ।
नानाचीरधरश्चैव रथ्यास्वनियतालय ॥१२७॥

उन्मत्तो भवति ह्येष तस्यैतां कारयेद् गतिम् ।
स्थित्वा नूपुरपादेन दण्डपाद प्रसारयेत् ॥१२८॥
बद्धां चारीं तथा चैव कृत्वा स्वस्तिकमेव च ।
अनेन चारीयोगेन परिभ्राम्य तु मण्डलम् ॥१२९॥
बाह्यभ्रमरकं चैव रङ्गकोणे प्रसारयेत् ।
त्रिकं सुवलितं कृत्वा लताख्यं हस्तमेव च ॥१३०॥
विपर्ययगतैर्हस्तैः पद्भ्यां सह गतिर्भवेत् ।
त्रिविधा तु गति कार्या खञ्जपङ्गुकवामनैः ॥१३१॥

---

पद्भ्यां सह विपर्ययगतैरपि पादचेष्टा तथा करकर्मण्यनुवर्तनीयेति ।१३०। कुहकः अधमः । तिस्त्रिन इति केचित् कुहकशब्देन ह्यम्बरम इत्येतत् ।१३१। तत्र पादहीने खञ्ज-

---

१. NS घूर्णपदं ।
२. NS पदैः प्रस्खलितैरथ । KSS करैः प्रचलितैस्तथा ।
३. KSS गतिश्च नियतक्रमा । NS गतिरत्वनियतक्रमात् ।

विकलाङ्गप्रयोगेण कुहकाभिनय प्रति ।
एकः खञ्जगती नित्य स्तब्धो वै चरणो भवेत्॥१३२॥

तथा द्वितीय कार्यस्तु पादोऽग्रतलसञ्चरः ।
स्तब्धेनोत्थापनं कार्यमङ्गस्य चरणेन तु ॥१३३॥

गमनेन निषण्ण स्यादन्येन चरणेन तु ।
इतरेण निषीदेच्च क्रमेणानेन वै व्रजेत् ॥१३४॥

एषा खञ्जगति कार्या तलशल्यक्षतेषु च ।
पादेनाग्रतलस्थेन ह्युञ्चितेन व्रजेत्तथा ॥१३५॥

निषण्णदेहा पङ्गोस्तु नतजङ्घा तथैव च ।
सर्वसङ्कुचिताङ्गा च वामने गतिरिष्यते ॥१३६॥

न तस्य विक्रम कार्यो विक्षेपश्चरणस्य च ।
सोद्वाहिता पूर्णपदा सा कार्या कुहनात्मिका ॥१३७॥

विदूषकस्यापि गतिर्हास्यत्रयसमन्विता ।
अङ्गवाक्यकृतं हास्य हास्यं नेपथ्यजं स्मृतम् ॥१३८॥

दन्तुरः खलतिः कुब्जः खञ्जश्च विकृताननः ।
य ईदृशः प्रवेशः स्यादङ्गहास्यं तु तद्भवेत् ॥१३९॥

यदा तु बकवत् गच्छेदुल्लोकितविलोकितैः ।
अत्यायतपदत्वाच्च अङ्गहास्यो भवेत्स तु ॥१४०॥

कार्यहास्यं तु विज्ञेयमसंबद्धप्रभाषणात् ।
अनर्थकैर्विकारैश्च तथा चाश्लीलभाषितैः ॥१४१॥

---

दिक्षतमस्य तस्मिन् गतिमाह पादेनाग्रतलस्थेनेति नकुंट ।३५। प्रवेश इति यद्यस्मा-दीदृश. प्रवेश्यमान पात्रविशेष. रङ्गे भवति ततोऽङ्गहास्यमिति । प्रवेशपदेन नाट्य एव रसो न लोक इति दर्शयति ।३६। असम्बद्धं निरर्थमनुचित च, तच्चाचष्टे अनर्थ-कैरश्लीलैश्चेति, अश्रियमशोभा रातीति रेफस्य लत्वम् ।४०।

तस्मादिति त्रिप्रकारं हास्यमाश्रित्य क्वचिदेक प्रकार., क्वचित् द्वौ, क्वचिदमुं द्वयेनैव क्रमेण विदूषक. स्वामिनः प्रकृति राजामात्यश्रेष्ठिप्रकृति भावं चित्तवृत्ति

कार्या चैव हि नीचानां चेटादीनां परिश्रमात् ।
अधमा इति ये ख्याता नानाशीलाश्च ते पुनः ॥१४७॥

पार्श्वमेकं शिरश्चैव करः सचरणस्तथा ।
शकारस्यापि कर्तव्या गतिश्चञ्चलदेहिका ।
गतौ नमेत चेटानां दृष्टिश्चार्थविचारिणी ॥१४८॥

वस्त्राभरणसंस्पर्शैर्मुहुर्मुहुरवेक्षितं ।
गात्रैर्विकारविक्षिप्तैर्लम्बवस्त्रस्रजा तथा ॥१४९॥

सगर्विता चूर्णपदा शकारस्य गतिर्भवेत् ।
जात्या नीचेषु योक्तव्या विलोकनपरा गतिः ॥१५०॥

अमस्पर्शाच्च संक्षिप्य स्वाङ्गानि विनिगुह्य च ।
म्लेच्छानां जातयो यास्तु पुलिन्दशबरादय ॥१५१॥

तेषां देशानुसारेण कार्यं गतिविचेष्टितम् ।
पक्षिणां श्वापदानां च पशूनां च द्विजोत्तमा ?॥१५२॥

स्वस्वजातिसमुत्थेन स्वभावेन गतिर्भवेत् ॥
सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभि ॥१५३॥

या कृता नरसिंहेन विष्णुना प्रभविष्णुना ।]
आलीढस्थानकं कृत्वा गात्रं तस्यैव चानुगम् ॥१५४॥

---

प्रतिज्ञाचापत्यं तन्महाकविना भासेन राजापि विन्यस्तेतु शकार इति भूयसा व्यवहृतः ।१४७। वस्त्राभरणसंस्पर्शोपलक्षितसर्वयोगोऽत्र पक्षे क्लिष्टतर. । न चायं देश-जातिः शकार कश्चित्प्रसिद्धः । म्लेच्छजातय. पृथगेव निर्दिश्यन्ते "म्लेच्छानां जातयो यास्तु" इत्यादिना, तस्मादिहाधमोदय एव शकार इति युक्तम् ।१४८।

प्रभविष्णुनेति वचनादिह मुख्यदशावतारप्राधान्येन, ये ऋक्षवानरादयो जाम्बवत्सुग्रीवाङ्गदहनुमदाद्या तेषामेव गति. । अन्येषां तु स्वजात्यानुरूप्येणैव । तत्र्यवेत्यालीढस्थानुगतं गात्रं दाक्षभागमननिन्दयं. ।१५४।

जानूपरि करं 'हृ'कमपरं वक्षसि स्थितम् ।
अवलोक्य दिशः कृत्वा चिबुकं बाहुमस्तके ॥१५५॥

गतास्य विकर्मविप्रा ? पञ्चतालान्तरोत्थितं ।
[नियुद्धसमये चैव रङ्गावतरणे तथा ॥१५६॥

सिंहादीनां प्रयोक्तव्या गतिरेषा प्रयोक्तृभिः ।]
शेषाणामर्थयोगेन गतिं स्थानञ्च योजयेत् ॥१५७॥

बाहुलार्थप्रयोगेषु रङ्गावतरणेषु च ।
एवमेता प्रयोक्तव्या नराणां गतयो बुधैः ॥१५८॥

नोक्ता या या मया ह्यत्र ग्राह्यास्तास्ताश्च[1] लोकतः ।
अतः परं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ॥१५९॥

स्त्रीणां स्थानानि कार्याणि गतिष्वाभरणेषु च ।
आयतं चावहित्थं च अश्वक्रान्तमथापि च ॥१६०॥

[स्थानान्येतानि नारीणामथ लक्षणमुच्यते ।]
वामः स्वभावतो यत्र पादो विरचितः समः ॥१६१॥

तालमात्रान्तरे न्यस्तस्त्र्यश्र पक्षस्थितोऽपरः ।
प्रसन्नमाननमुरः समं यत्र समुन्नतम् ॥१६२॥

लतानितम्बगौ हस्तौ स्थानं ज्ञेयं तदायतम् ।
[दक्षिणस्तु समः पादः [2]त्र्यश्रः पक्षस्थितोऽपरः ॥१६३॥

वामः समुन्नतकटिरिदमायते स्थानकं भवेत् ।
आवाहने विसर्गे च तथा निर्वर्णनेषु च ॥१६४॥

चिन्तायां चावहित्थे च स्थानमेतत्प्रयोजयेत् ।]
रङ्गावतरणारम्भे पुष्पाञ्जलिविसर्जनम् ॥१६५॥

मन्मथेर्ष्याकृतं कोपं तर्जन्यङ्गुलिमोटनम् ।
निषेधगर्वगाम्भीर्यमौन मानावलम्बनम् ॥१६६॥

स्थानेऽस्मिन् सविधातव्यं दिगन्तरनिरूपणम् ।
[समो यत्र स्थितो वामस्त्र्यश्रः पक्षस्थितोऽपरः ॥१६७॥

---

१ पंकम् NS स्वेषम् ।
२ NS. सर्वा ।
३. KSS, NS चापि ।

समुन्नतकटिर्वामस्त्ववहित्थन्तु तद्भवेत् ।]
[1]पुरो विचलितस्त्यश्रस्तदन्योपसृतः समः ॥१६८॥

पादस्तालान्तरन्यस्तस्त्रिकमीपत्समुन्नतम् ।
पाणिर्लताख्यो यत्रैकस्तदन्यस्तु नितम्बगः ॥१६९॥

अवहित्थं समाख्यातं स्थानमागमभूषणैः ।
[स्त्रीणामेतत् स्मृतं स्थानं संलापे तु स्वभावजे ॥१७०॥

निश्चये परितोषे च वितर्के चिन्तने तथा ।]
[2]विलासलीलाविब्बोक शृङ्गारात्मनिरूपणे ॥१७१॥

स्थानमेतत्प्रयोक्तव्यं भर्तुर्मार्गविलोकने ।
पादः समस्थितश्चैक एकश्चाग्रतलाञ्चितः ॥१७२॥

सूचीविद्धमविद्धं वा तदश्वक्रान्तमुच्यते ।
स्खलितं घूर्णितं चैव गलिताम्बरधारणम् ॥१७३॥

कुसुमस्तबकादानं परिरक्षणमेव च ।
विश्रामनं सललितं तरुशाखावलम्बनम् ॥१७४॥

स्थानेऽस्मिन् संविधानीयं स्त्रीणामेतत्प्रयोक्तृभिः ।
[शाखावलम्बने कार्यं स्तबकग्रहणे तथा ॥१७५॥

विश्रामेष्वथ [3]वेधानां [4]नराणाञ्चाथ योगतः ।]
स्थानकं तावदेव स्याद्यावच्चेष्टा प्रवर्तते ॥१७६॥

---

स्खलितमिति पदम् । तथा विशेषेण च्युत इत्यर्थं ।१७३। प्रकृतिस्थितादित्य-विशेषोनितः । प्राधान्यात्प्राधान्यात् तदस्ति गतिरित्युच्यते । इत्यावहित्थमित्यादि ।

---

१. KSS, NS पुरोऽपि चलित ।
२. KSS. विवाहलीलालावण्ये शृङ्गारादिनिरूपणे ।
३. KSS, NS. वाराणां चात्र .
४ इतोऽग्रे श्लोकद्वयेषु पाठक्रमो भिद्यते ।

[1]भग्नं च स्थानकं नृत्ते चारी चैवसमुपस्थिता ।
एष स्थानविधिः कार्यः स्त्रीणां नृणामथापि च ॥१७७॥
[2]पुनश्चासां प्रवक्ष्यामि गतिं प्रकृतिसंस्थिताम् ।
कृत्वाऽवहित्थं स्थानन्तु वामञ्चाधोमुखं करम् ॥१७८॥
नाभिप्रदेशे विन्यस्य सव्यञ्च [3]खटकामुखम् ।
ततः सललितं पादं तालमात्रसमुत्थितम् ॥१७९॥
दक्षिणं वामपादस्य बाह्यपार्श्वे विनिक्षिपेत् ।
तेनैव समकालञ्च लताख्यं वामकं भुजम् ॥१८०॥
दक्षिणं विनमेत्पार्श्वं न्यसेन्नाभितटे ततः ।
नितम्बे दक्षिणं कृत्वा हस्तञ्चोद्वेष्ट्य वामकम् ॥१८१॥
ततो वामपदं दद्याल्लताहस्तं च दक्षिणम् ।
लीलयोद्वाहितेनाथ शिरसाऽनुगतेन च ॥१८२॥
[4][किञ्चिन्नतेन गात्रेण गच्छेत्पञ्चपदीं ततः ।
यो विधिः पुरुषाणां तु रङ्गपीठपरिक्रमे ॥१८३॥
स एव प्रमदानां वै कर्तव्यो नाट्ययोक्तृभिः ।]
षट्कलं तु न कर्तव्यं तथाष्टकलमेव च ॥१८४॥
पादस्य पतनं तज्ज्ञैः क्षेत्रं तद्भवे[5]त्स्थिरया ।
सयौवनानां नारीणामेवं कार्या गतिर्बुधैः ॥१८५॥
[6]स्थवीयसीनामेतासां सम्प्रवक्ष्याम्यहं गतिम् ।
कृत्वाऽवहित्थं स्थानन्तु वामं न्यस्य कटीतटे ॥१८६॥

---

वामञ्चेति ॥१७८॥ लताख्यं बाह्यपार्श्वे दक्षिणाङ्गनिदेशे ॥१८०॥

यो विधिरिति यावद्वत्तं कुर्यादिति ॥१८३॥ अनिर्देशेन येन दर्शयति यावती काचिद्रङ्गप्रवृत्तिदेशकालापेक्षा नृणां गतिरुक्ता सा सर्वैवोक्ता विलासरूपप्रकारानुविद्धा स्त्रीणामपि विवक्षिता । दिक्कालपरिमाणत्वं यत्र तोनोदात तत्र विशेषमाह । एतदङ्गेनैव व्याख्यातं चतुष्कलादभ्यधिको न स्त्रीणां मानविधिरिति । अष्टकलग्रहणं तदभ्यधिकमानं पुरुषेष्वपि नास्तीति सूचयति । अन्यथा षट्कले निषिद्धे त्वष्टकलस्य सुगतिस्तन्निषेधेन ॥१८४।१८५॥ स्थानीया मध्यमवयस्, अत एव मध्यमप्रकृतिरव-

---

१ KSS NS भग्नावस्थानकं नृत्ते चारी च समुपस्थिता ।
२. KSS NS पुनश्च सम्प्रवक्ष्यामि ।
३ KSS. कटकामुखम् ।
४. KSS., NS do not read
५. KSS स्थिरं ।
६ GOS स्थानीया वा स्थिरवनाथां ।

आद्यञ्चारालमुत्तानं कुर्यान्नाभिस्तनान्तरे ।
न निवण्णं न च स्तब्धं न चापि परिवाहितम् ॥ १८७ ॥

कृत्वा गात्रं ततो गच्छेत्तेनैवेह क्रमेण तु ।
प्रेष्याणामपि कर्तव्या गतिरुद्भ्रान्तगामिनी ॥ १८८ ॥

क्वचिदुन्नमितैर्गात्रैराविद्धभुजविक्रमा ।
स्थानं कृत्वाऽवहित्थञ्च वामञ्चाधोमुखं भुजम् ॥ १८९ ॥

नाभिप्रदेशे विन्यस्य सव्यञ्च खटकामुखम्[1] ।
अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ॥ १९० ॥

उदात्तललितैर्गात्रैः पादैर्लीलासमन्वितैः[2] ।
या पूर्वमेवाभिहिता ह्युत्तमानां गतिर्मया ॥ १९१ ॥

स्त्रीणां कापुरुषाणाञ्च ततोऽर्धार्धन्तु योजयेत् ।
मध्यमोत्तमनीचानां नृणां यद् गतिचेष्टितम् ॥ १९२ ॥

स्त्रीणां तदेव कर्तव्या ललितैः पदविक्रमैः ।
बालानामपि कर्तव्या स्वच्छन्दपदविक्रमा ॥ १९३ ॥

न तस्याः सौष्ठवं कार्यं [3]न प्रमाणं प्रयोक्तृभिः ।
तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसका ॥ १९४ ॥

---

मनुष्यम् ।१८६। आद्य दक्षिणम् । परिवाहितमिति ।१८७। सविभागमधमानां गतिमाह प्रेष्याणामित्यादि । उद्भ्रान्तगामिनीति भ्रमदविकारा ।१८८। आविद्धो वर्तनाबहुलो बाहुजानां विभ्रमस्य ।१८९। नार्या अर्धमिति नपुंसकलक्षणा तृतीया प्रकृतिरुच्यते, समप्रविभागविवक्षया चार्धं नपुंसकमिति समासः ।१९०। उदात्तत्वं पुरुषाणां, लालित्यं योषितां गतौ । गतिरिति चतुस्ताला चतुष्कला च, अनुत्तमस्त्रीणां द्वितालाः द्विकलेति ततोऽप्यर्धा कापुरुषाणां, तत्कर्मकराणामेकताला एककला चेति । विभुत्तमानामेव स्थाने दर्शयति मध्यमोत्तमानां नृणामुदारत्वं यद्गतिचेष्टितं तदेव उदात्तमध्यमोत्तमनीचानां स्त्रीणां तथा तत्कर्मकराणां कुर्यादित्युत्तमग्रहणम् ।१९१।१९२।

सर्वग्राहकं दर्शयितुं यत्रोत्तमादिविभागो नोद्भिन्नः तत्र गतिमाह बालानामपीति ।१९३।

---

१ KSS खटकामुखम् ।
२. KSS, NS. पदैः ।
३. KSS प्रमाणं न ।

नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ।]
विपर्ययः प्रयोक्तव्यः पुरुषस्त्रीनपुंसके ॥१९५॥

स्वभावमात्मनस्त्यक्त्वा तद्भावगमनादिह ।
व्याजेन क्रीडया वाऽपि तथा भूयश्च वञ्चनात् ॥१९६॥

स्त्री पुंसः प्रकृतिं कुर्यात् स्त्रीभावं पुरुषोऽपि च ।
धैर्यौदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ॥१९७॥

स्त्री पुमांसं त्वभिनयेत् वेषवाक्यविचेष्टितैः ।
स्त्रीवेषभाषितैर्युक्त प्रेक्षिताप्रेक्षितैस्तथा ॥१९८॥

मृदुसन्नगतिश्चैव पुमान् स्त्रीभावमाचरेत् ।
[जातिहीनाश्च या नार्यः पुलिन्दशबराङ्गनाः ॥१९९॥

याश्चापि, तासां कर्तव्या तज्जातिसदृशी गतिः ।
व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथैव च ॥२००॥

आस्थानाच्चैव नारीणां समपादं प्रयोजयेत् ।
उद्धता येऽङ्गहाराः स्युर्याश्चार्यो मण्डलानि च ॥२०१॥

तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिताम् ।[1]]
तथासनविधिः कार्यो भूमौ स्त्रीणां विशेषतः ॥२०२॥

---

तद्भावगमनादिति । यदेव रूपं यो गृह्णाति तदीयैव तस्य गतिः । विपर्यय-परिग्रहे च विशिष्टार्थं कारणमाह व्याजेनेति । व्याजः कस्यचिद्वञ्चनस्य साधनाय, यथा विदूषकस्य सङ्केतस्थाने चेटिकावस्त्रधारणम् । क्रीडा यथा इष्टजनस्याङ्गुलौ नायिकानाम् । वञ्चनादिति यथा विदूषकं वञ्चयितुं चेटस्य स्त्रीवेषकरणम् ॥१९६॥

अपि चेति ग्रहणात् स्त्रीपुंसयोर्नपुंसकेन सह तस्य च ताभ्यां सह विपर्ययं दर्शयति । अत्रैव विपर्यये गतिविपर्यये प्रसङ्गेन व्यभिचारिभावाद्यात्मिकोपाङ्गाभि-नयविपर्ययमप्याह धैर्यौदार्येणेति । धैर्यौदार्यं सामान्याभिनयोक्तं । ताभ्यां भावा उपलक्ष्यन्ते । बुद्ध्येति स्थायित्वम् । सत्त्वेनेति सात्त्विकाः । कर्मणेति स्थानकादि-विषयं, वेषेति आहार्यप्रकाराः, वाक्येति वाचिकसंस्कृतादिप्रयोगः, चेष्टितैरिति अन्तरालस्थानं त्रिपताकादयः १९७।१९८।

यथास्थानकगतानां पूर्वपश्चाद्भावि तयोर्वेधनात्मकमासनमपीति तद्विधमाह तथासनविधिरिति ॥२०२॥ सर्वैवेति गतौ हि यानमपि पूर्वपश्चाद्भावि

---

१. KSS, NS योषिता ।

नानाभावसमायुक्तास्तथा च शयनाश्रयः ।
[1]विष्कम्भिताञ्चितौ पादौ त्रिकं किञ्चित्समुन्नतम् ॥२०३॥

[2]हस्तौ कट्यूरुविन्यस्तौ स्वस्थे स्यादुपवेशने ।
पाद प्रसारितः किञ्चिदेकश्चैवासनाश्रय ॥२०४॥

शिरः पार्श्वनतं चैव सचिन्त उपवेशने ।
चिबुकोपाश्रितौ हस्तौ बाहुशीर्षाश्रितं शिरः ॥२०५॥

सम्प्रणष्टेन्द्रियमनाः शोकौत्सुक्योपवेशने[4] ।
प्रसार्य बाहू शिथिलौ तथा चोपाश्रयाश्रितः ॥२०६॥

[5]मोहमूर्च्छामदग्लानिविषादेषूपवेशयेत् ।
सर्वपिण्डीकृताङ्गस्तु [6]संयुक्तः पादजानुभिः ॥२०७॥

व्याधिव्रीडितनिद्रासु ध्याने चोपविशेन्नरः ।
[7]तथा चोत्कटिकं स्थानं स्फिक्पार्ष्णीनां समागमः[8] ॥२०८॥

---

शयनाश्रय इति शेषः । विष्कम्भेन वैशाखस्थानकोचितेन विस्तारेणाञ्चितौ विस्तीर्णान्तरौ सुन्दरौ पादौ, न त्वत्राञ्चितपादलक्षणयोग । स्वस्थे पुंसि यदुपवेशनमासनपीठिकादौ तत्र त्रिकमुन्नतं स्यादिति संबन्ध । "इति शब्देन वाक्यार्थः, स्यादित्यत्र कर्तव्यास्येय" इति स्यादिति । हस्ताविति मर्कटरूपो समाहारद्वन्द्वे ।२०३।२०४। सम्प्रणष्टेन्द्रियमात्रा इति पाठः मन इति पाठे (प्रोच्यते ?) वृत्ते

---

१. KSS , NS विष्कम्भेणाञ्चितौ ।
२. KSS., NS. हस्ता. कट्यूरुविन्यस्ता. ।
३. NS. बाहुशीर्षाश्रित शिरः ।
४. NS. मर्वेच्छोकोपवेशने ।
५. GOS., NS मूर्च्छामदश्रमग्लानि ।
६. NS. सम्पाते ।
७. KSS. तथा चोत्कटिकास्थानं ।
८. NS समागमम् ।

स्निग्धे[1] निवापे सन्ध्ये च सन्ध्यास्वाचमनेऽपि च[2]।
विष्कम्भितं पुनश्चैव जानु भूमौ निपातयेत् ॥२०९॥
प्रियाप्रसादने कार्यं होमादिकरणेषु च।
महीगताभ्यां जानुभ्यामधोमुखमवस्थितम् ॥२१०॥
देवाभिगमने चैव रुषितानां प्रसादने।
शोके चाक्रन्दने[3] तीव्रे मृतानां चैव दर्शने ॥२११॥
त्रासने च कुसत्त्वानां [4]नीचानाञ्चैव याचने।
होमयज्ञक्रियायाञ्च प्रेष्याणाञ्चैव कारयेत्[5] ॥२१२॥
मुनीनां नियमेष्वेव भवेदासनजो विधिः।
तथासनविधिः कार्यो विधिज्ञो नाटकाश्रयः ॥२१३॥

---

स्वभ्याहृत्य सङ्गतिः कार्या। अपाश्रयवतीत्यादिकमाश्रितम् ।२०६। उपवेशनविधिरिति स्वार्थं पितृ आचार्ये वा वक्तुं भूनत्वमात्रम्। आचार्यास्तु बाहु प्रमार्येवासने उपवेशयेत् विश्रामयेदित्याहुः। स्निग्धत्वमन्त्राणां जानुविन्यासादूर्ध्वं काय कुटिलीकरोतीत्युत्कट मन्त्राया वर्तते। अत्र च विन्यस्य जानुनो स्फिग्भ्यां भूमेः परामर्शः पूर्वत्र तु नैतदुभयमपीति विशेषः ।२०७। स्निग्ध इति श्राद्धादौ निवापसलिलम् इति पितृतर्पणे, प्रतिग्रहार्थं परस्य सलिलदाने तत्प्रतिग्रहे च। सन्ध्यावन्दने तदवसरोचित, जपध्यानादि। विष्कम्भितमिति विस्तारितमेकं भूमौ जानु द्वितीयं यथास्थितं यत्रनिकटे ढौकनं गमनं नवम् सन्तापादिनिवृत्। तत्र च कार्यं मन्त्र तदुपलक्षणम् ।२०८। होमादिकरणेष्विति ।२०९। अभिगमनं वन्दनम्। शोके चेति नीचानाञ्चेति सर्वत्रात्र सम्बध्यते ।२१०। नीचानां शोकजनितो यस्तीव्र आक्रन्दस्तत्रैव, नीचा यदा मृतमवलोकयन्ति। सत्त्वप्रमाणे षष्ठीतुल्ययोगतापन्नाभावान्न नियमः। कुसत्त्वा सिंहादय यदा नीचान् त्रासयन्ति तदा। नीचा यदा किञ्चिद्याचन्ते तदा जानुगमनेरो भूमौ ।२११।

कथासनात्मकं कालासननिवेशप्रसङ्गेन तदधिकरणेषु विधिमाह तथासनविधिरिति बाह्यः सर्वजनविषय आभ्यन्तरो राजोचित ।[illegible]



---

१. NS. निर्वापसलिले।
२. NS. आचमनेषु च।
३. NS. तीव्र KSS. तीव्रमृताना।
४. NS. दीनानां।
५. NS. योजयेत्।

स्त्रीणाञ्च पुरुषाणाञ्च बाह्यश्चाभ्यन्तरस्तथा ।
[आभ्यन्तरस्तु नृपतेर्बाह्यो बाह्यगतस्य च ॥२१४॥]

देवानां नृपतीनाञ्च दद्यात् सिंहासनं द्विजाः ।
पुरोधसाममात्यानां भवेद्वेत्रासनं तथा ॥२१५॥

मुण्डासनञ्च दातव्यं सेनानीयुवराजयोः ।
[1]काष्ठासनं द्विजातीनां कुमाराणां[2] कुथासनम् ॥२१६॥

एवं राजसभां प्राप्य कार्यस्त्वासनजो विधिः ।
स्त्रीणां[3]त्वाप्यासनविधिं सम्प्रवक्ष्याम्यहं पुनः ॥२१७॥

सिंहासनन्तु राज्ञीनां देवीनां मुण्डमासनम् ।
पुरोधोऽमात्यपत्नीनां [4]वेत्राद्वेत्रासनं तथा ॥२१८॥

भोगिनीनां [5]तथा चैव वस्त्रञ्चर्म कुथोऽपि वा ।
ब्राह्मणीतापसीनाञ्च पट्टासनमथापि च ॥२१९॥

वेश्यानाञ्च प्रदातव्यमासनञ्च मसूरकम् ।
शेषाणां प्रमदानान्तु भवेद् भूम्यासनं द्विजाः ? ॥२२०॥

एवमाभ्यन्तरो ज्ञेयो बाह्यश्चासनजो विधिः ।
तथा स्वगृहवार्तासु छन्देनासनमिष्यते ॥२२१॥

---

मुण्डासनं चातुरी ।२१८। मसूरकं वस्तुशून्यं, काष्ठासनं पीठकं, वेत्रलताकृतं वेत्रासनं वेत्रासनादन्य एव कश्चो वर्णवस्त्रलक्षणः । विस्तारितैरथैरन्ये राज्ञी राजवंश्या देवी । सेनापतिप्रभृतिपुत्र्यो राज्ञा परिणीता भोगिन्यः सगृहीतकन्याः ।२१९। भूमिरेवासनं भूम्यासनं । एवमिति नरपतिसन्निधौ । अन्यदात्मस्वेच्छयेति दर्शयति तथा स्वगृहेति ।२२०। वार्ताशब्देन सेनापतेरमात्यगृहगमनं इत्यादि सूचयति ।२२१।

---

१. KSS. कुब्जासनं ।
२. KSS कुमारीणां ।
३. NS. चैवासनविधिं ।
४. NS भवेत् ।
५. NS. पुनश्चैव वस्त्रं चर्म कुथाऽपि वा । KSS तथा चैव कुथा चर्म कुथाऽपि वा ।

नियमस्थमुनीनां च भवेदासनजो विधिः ।
लिङ्गिनामासनविधिः कार्यो व्रतसमाश्रयः ॥२२२॥

कूर्चीमुण्डासनप्रायं वेत्रासनमथापि च ।
होमे यज्ञक्रियायाञ्च पित्र्येऽर्थे च प्रयोजयेत् ॥२२३॥

स्थानीया ये च पुरुषाः कुलविद्यासमन्विताः ।
तेषामासनसत्कारः कर्तव्य इह पार्थिवैः ॥२२४॥

समे समासनं दद्यात् मध्ये मध्यममासनम् ।
अतिरिक्तेऽतिरिक्तञ्च हीने भूम्यासनं भवेत् ॥२२५॥

उपाध्यायस्य नृपतेर्गुरूणामग्रतो बुधैः ।
भूम्यासनन्तथा[1] कार्यमथवा काष्ठमासनम् ॥२२६॥

नौनागरथयानेषु [2]भूमिकाष्ठासनेषु च ।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः ॥२२७॥

---

नियमस्थ इति कस्यचिद्ब्रह्मचारिणोऽध्ययस्य मृगाजिनम् । लिङ्गिनामिति । यथा शाक्यानां कूर्ची, नीरानां मुण्डासनं, क्षपणकानां वेत्रकल्पितबिम्बकम् ।२२२। तदेवाह कूर्चीत्यादि । स्थानीय हिता वृद्धा ये भवन्ति तन्निकटे व्यवस्था दृष्टादृष्टोपयोगिनी अत एवाह कुलविद्येति । आसनसत्कार इहास्यतामिति ।२२३।२२४।

तत्र विभागमाह सम इति तत्तुल्यज्ञानिविद्य । सममिति निजस्वासनापेक्षया मध्य इति किञ्चिदूनेन, मध्यममिति स्वासनात्प्रमाणतोऽप्यून हीन इति स्वापेक्षया भूम्या सह भूमिरेव इहास्यतामिति निर्देश्या स एव तस्यासनसत्कारः ।२२५। काष्ठमिति एवमेव दीर्घं भद्रासनं पर्यङ्कं दर्शयितुं काष्ठमित्युक्तं न तु काष्ठमयमिति ।२२६।

---

१ NS सदा ।
२. KSS तथा काष्ठासनेषु ।

आकुञ्चितं समञ्चैव प्रसारितविवर्तने ।
उद्वाहितं [1]नतञ्चैव शयने कर्म कीर्त्यते ॥२२८॥

[2]सर्वैराकुञ्चितैरङ्गैः [3]शय्याविद्धे तु जानुनी ।
स्थानमाकुञ्चितं नाम शीतार्तानां प्रयोजयेत् ॥२२९॥

उत्तानितमुखं चैव स्रस्तमुक्तकरं तथा ।
समं नाम प्रसुप्तस्य स्थानकं संविधीयते ॥२३०॥

एकं भुजमुपाधाय सम्प्रसारितजानुकम् ।
स्थानं प्रसारितं नाम सुखसुप्तस्य कारयेत् ॥२३१॥

अधोमुखस्थितञ्चैव [4]विवर्तितमिति स्मृतम् ।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥२३२॥

अंसोपरि शिरः कृत्वा कूर्परक्षोभमेव च ।
उद्वाहितन्तु विज्ञेयं लीलया वेशने प्रभो ॥२३३॥

ईषत्प्रसारिते अङ्गे यत्र स्रस्तौ करावुभौ ।
आलस्यमदखेदेषु नतं स्थानं विधीयते] ॥२३४॥

---

अथ शयनसन्निवेशनमाहाकुञ्चितमिति । दिक् । या निजशरीरस्य कुटिलीकरणात्सा स्यात् । बाहु (मध्यम ?) प्रसारणे विशेषयोगात् पार्श्वे सन्निवेशनवशात्। पूर्वकायस्यापरकायस्योर्ध्वनयनं नान्यशयन सन्निवेशात् ।२२८।

अयंवशेनेति श्रीशिवेनेत्यर्थं । अथैतदुपसङ्गाध्यायान्तरावकाश संगतिप्रदर्शनपूर्वकमाह अत परमिति । रङ्गे यत्परिक्रमात् परिक्रमणाद् वृत्ते गत्यध्याये

---

१. NS सम KSS. तथा ।
२ NS. सर्वैरनाकुञ्चितैः ।
३ NS शय्याविद्धेषु ।
४. NS. विवर्तनमिति ।

गतिप्रचारस्तु मयोदितोऽयं
नोक्तश्च यः सोऽर्थवशेन साध्यः ।
अतः परं रङ्गपरिक्रमस्य
वक्ष्यामि कक्ष्यां प्रविभागयुक्ताम्¹ ॥२३५॥

इति भरतीये नाट्यशास्त्रे गतिप्रचारो नाम द्वादशोऽध्यायः ।

---

निरूपितं तदुपयोगं कक्ष्याविभेदविभाग इति शिवम् ।२३५।

यावद्गतिभेदविधिप्रकटनमध्यायमिह विवृणुते
स्मरमथनचरणमर्पितपरागभूनोऽभिनवगुप्तः ।

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेदविवृतावभिनव-
भारत्यां गत्यध्यायो द्वादशः समाप्तः ।

---

1. GOS कक्ष्यान्तरविधानम्

# अभिनवभारतीस्वीकृतपाठक्रमाद् भिन्नपाठक्रमवान् द्वादशोऽध्यायः

एव व्यायामसजात कार्यं मण्डलकल्पनम् ।
अत ऊर्ध्वं प्रवक्ष्यामि गतिस्तु प्रकृतिस्थिता ॥१॥

तत्रोपवहन कृत्वा भाण्डवाद्यपुरस्कृतम् ।
यथा मार्गरसोपेत प्रकृतीना प्रवेशनम् ॥२॥

ध्रुवाया सप्रवृत्तायां पटे चैवापकर्षिते ।
कार्य प्रवेश· पात्राणा नानार्थरससभव ॥३॥

स्थान तु वैष्णवं कार्यमुत्तमे मध्यमे तथा ।
समुन्नत सम चैव चतुरस्रमुरस्तथा ॥४॥

बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ।
ग्रीवाप्रदेश. कर्तव्यो मयूराञ्चितमस्तकः ॥५॥

कर्णाभ्या बाहुशिरसौ स्यातामष्टाङ्गुलस्थिते ।
उरसश्चापि चिबुक चतुरङ्गुलसस्थितम् ॥६॥

हस्तौ तथैव कर्तव्यौ कटिनाभितटस्थितौ ।
दक्षिणो नाभिसंस्थस्तु वाम. कटितटे स्थितः ॥७॥

पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च ।
पादोत्क्षेपश्च कर्तव्य स्वप्रमाणविनिर्मितः ॥८॥

चतुस्तालो द्वितालश्चाप्येकतालस्तथैव च ।
चतुस्तालस्तु देवाना पार्थिवाना तथैव च ॥९॥

द्वितालश्चैव मध्याना ताल स्त्रीनीचलिङ्गिनाम् ।
चतुष्कलोऽथ द्विकलस्तथा ह्येककल पुन· ।
चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् ॥
तथा चैककल पातो नीचानां सप्रकीर्तित. ।
स्थितं मध्यं द्रुत चैव समवेक्ष्य लय बुध. ॥

यथाप्रकृति नाट्यज्ञो गतिमेव प्रयोजयेत् ।
स्वभावेनोत्तमगतौ जानुं कुर्यात्कटीसमम् ॥१०॥

युद्धचारीप्रचारेषु जानु स्तनसमं भवेत् ।
अथ विधिस्तु कर्तव्यः स्वच्छन्दगमनं प्रति ॥११॥

सम्भ्रमोत्पातरोषेषु प्रमाणं न विधीयते ।
दृप्तानां दैत्ययक्षाणां तथा पन्नगरक्षसाम् ॥१२॥

चतुस्तालप्रमाणेन कर्तव्या तु गतिर्बुधैः ।
दिव्यौकसां तु देवानां मध्यमा गतिरुच्यते ॥१३॥

तत्रापि चोत्तमा ये तु तेषां देवैः समा गतिः ।
पुलिन्दाः शबराश्चैव शेषा ये म्लेच्छजातयः ॥१४॥

तेषां देशानुरूपेण कार्यं गतिविचेष्टितम् ।
जलाशयमृगव्यालपशुव्यापदपक्षिणाम् ॥१५॥

देशजातिसमुत्थेन गतिं भावेन योजयेत् ।
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयं बुधः ॥१६॥

पादयोः पतनं सम्यक्प्रकुर्वीत यथाक्रमम् ।
स्थैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्यमसंस्थितानाम् ।
द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥१७॥

चतुष्कलं तूत्तमानां मध्यानां द्विकलं भवेत् ।
तथा चैककलं पातं नीचानां संप्रयोजयेत् ॥१८॥

यः सर्वं सहितो गच्छेत्तत्र कार्यो लयाश्रयः ।
चतुष्कलश्च द्विकलस्तथा चैककलः पुनः ॥१९॥

अथ मध्यमनीचैस्तु गच्छेत्परिवारितः ।
चतुष्कलस्तथार्धे च तथा चैककलो भवेत् ॥२०॥

एवमेव तु विज्ञेयं कलानां गमने विधिः ।
पुनर्गतिप्रचारस्य प्रयोगं शृणुतानघाः ? ॥२१॥

पार्श्वाक्रान्तं सललितं पादैर्बाह्यान्वितैरथ ।
रङ्गोन्मुखो गच्छेत्सम्यक्पञ्चपदानि तु ॥२२॥

एवं गतागतैर्गत्वा पदानामेव विंशतिम् ।
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणस्य च ॥२३॥

रङ्गे विकृष्टे भरतेन कार्यो गतागतं पादगतिप्रचारः ।
त्र्यश्रस्थितेऽपि चतुरश्ररङ्गे गतिप्रचारश्चतुरश्र एव ॥२४॥

द्रुता गतिस्तु कर्तव्या द्विकला पादपातने ।
ज्येष्ठे चतुष्कला कार्या द्विकला तत्र मध्यमे ॥२५॥

द्विकला चोत्तमे यत्र मध्ये त्वेककला भवेत् ।
कलाप्रमाणं मध्ये च नीचे त्वर्धकला ततः ॥२६॥

एवमर्धार्धहानिं तु कलानां सम्प्रयोजयेत् ।
उत्तमाना गतिर्या तु न तां मध्येषु योजयेत् ॥२७॥

या गतिश्चैव मध्यानां न तां नीचेषु योजयेत् ।
उत्तमानां मयोक्ता तु गतिर्विप्रा यथायथम् ॥२८॥

मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः ।
वणिजां मन्त्रिणां चैव गतिः कार्या स्वभावजा ॥२९॥

अतिक्रान्तपदं सा तु द्वितालान्तरगामिभिः ।
कृत्वा नाभितटे हस्तमुरस्यन्यं खटकामुखम् ॥३०॥

आद्यं धारानमुत्तानं कुर्यात्पार्श्वस्तनान्तरे ।
न निषण्णं न च स्तब्धं न चैव परिवाहितम् ॥३१॥

कृत्वा गात्रं तथा यष्ट्येतेन वायक्रमेण तु ।
हासे त्वथ गतिः कार्या तथा खञ्जनवामने ॥३२॥

द्विकम्पार्थप्रयोगेषु (कुहको दाम्भिकः) कुहकाभिनयं प्रति ।
खञ्जे गतिस्तु कर्तव्या स्तब्धैकचरणाश्रया ॥३३॥

तथा द्वितीयः कार्यस्तु पादोऽग्रतलसंचरः ।
स्तब्धेनोन्नमनं कार्यमङ्गस्य चरणेन तु ॥३४॥

गमने च निषण्णं स्यात्तथान्यचरणाश्रये ।
एवं खञ्जप्रयोगेषु तलशल्यक्षते तथा ॥३५॥

पादेनाग्रतलेनाथ गतिः कार्याऽन्धिनेन तु ।
निषण्णदेहा कर्तव्या नतजङ्घा तथैव तु ॥३६॥

सर्वसंकोचिताङ्गी च वामने गतिरिष्यते ।
न तस्यातिक्रमः कार्यो विक्षेपश्चरणस्य तु ॥३७॥

उद्वाहिना घूर्णपदं सा कार्या कुहकात्मिका ।
विदूषकस्यापि गतिर्हास्यत्रयविभूषिता ॥३८॥

अङ्गहास्य  कार्यहास्य हास्य नेपथ्यजं तथा ।
कुब्ज. खञ्जोऽथ खलतिर्दन्तुरो विप्लुतानन ॥३९॥

यत्तादृशो भवेद्विप्र. । अङ्गहास्य त तद्भवेत् ।
यदा तु बकवद् गच्छेदुल्लोकितविलोकितैः ॥४०॥

अत्यायतपदत्वाच्चाप्यङ्गहास्यो भवेत्तु स ।
चीरचर्मधरो भस्मगैरिकादिविभूषणं ॥४१॥

यत्तादृशो भवेद्विप्र । हास्य नेपथ्यज तु तत् ।
कार्यहास्य तु विज्ञेयमसम्बद्धभाषणं ॥४२॥

अनर्थवाक्यविविधैस्तथा चाश्लीलभाषणं ।
तस्य तु प्रकृतिं ज्ञात्वा तथा भाव विचक्षण ॥४३॥

गतिप्रचार  विभजेन्नानावस्थान्तरात्मकम् ।
स्वभावजायां विन्यस्य कुटिलं वामके करे ॥४४॥

दक्षिण चैव हस्त तु कुर्याच्चतुरकं तथा ।
पार्श्वमेकं शिरश्चापि हस्तेन चरणमेव च ॥४५॥

पर्यायत  सन्नमयेल्लयतालवशानुगम् ।
स्वभावजाता सर्वेषां गतिरन्या विकारजा ॥४६॥

लाभे तथा च नृपतेस्तुष्टे चापि गतिर्भवेत् ।
शाकारस्यापि कर्तव्या गतिश्चञ्चलवहिता ॥४७॥

वस्त्राभरणसंस्पर्शी सम्यक् पञ्चपदानि तु ।
वामवेध तत कुर्याद्विक्षेप दक्षिणेन च ॥४८॥

परिवृत्य द्वितीय तु गच्छेत्कोण तत परम् ।
तत्रापि वामवेध तु विक्षेपो दक्षिणेन च ॥४९॥

ततो भाण्डोन्मुखो गच्छेत्तान्येव पदानि तु ।
एव गतागतैर्वा पदानि स्वर्णायतातिम् ॥५०॥

वामवेध तत. कुर्याद्विक्षेप दक्षिणेन च ।
एषा स्वभावगमने गति कार्या प्रयोक्तृभि ॥५१॥

अवस्थान्तरयोग तु गति समनुबोधत ।
अत्यन्तकामित चैव भयविज्ञापन तथा ॥५२॥

आवेगे च तथा हर्षे तथानिष्टश्रुतावपि ।
कालातिक्रमणे चैव क्षेपे चाद्भुतदर्शने ॥५३॥

कार्ये चात्ययिके चैव दुःखिते चारिमार्गणे ।
अपरुद्धानुसरणे श्वापदानुगतौ तथा ॥५४॥

गतिमेतेषु भावेषु द्विकलां सम्प्रयोजयेत् ।
दिव्यानां नृपतीनां च गतिरेव विधीयते ॥५५॥

अथोच्यते कथं देवैः समा राज्ञां गतिर्भवेत् ।
दिव्या तु प्रकृतिर्ज्ञेया तथान्या दिव्यमानुषी ॥५६॥

मानुषी चैव मन्तव्या नाट्यवृत्तिक्रिया प्रति ।
दिव्या तु देवप्रकृती राज्ञां स्याद्दिव्यमानुषी ॥५७॥

अन्या या लोकसंस्था तु मानुषी सा प्रकीर्तिता ।
तस्माद्देवानुकरणे दोषस्तत्र न विद्यते ॥५८॥

गतिः शृङ्गारिणी कार्या स्वस्थकामितसम्भवा ।
चतुष्कलाप्रमाणेन सविलासा सचैव च ॥५९॥

दूतीदर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
सूच्या चैवाप्यभिनयं प्रकुर्याद्विषयाश्रयम् ॥६०॥

हृद्यैर्वस्त्रैस्तथा गन्धैर्धूपैश्चूर्णैश्च योजितैः ।
सुगन्धिभिश्च मालाभिर्विचित्राभिरलङ्कृतः ॥६१॥

गच्छेत्सललितैः पादैरसित्रातोत्थितैस्य ।
सौष्ठवेन समायुक्तैर्लयतालवशानुगैः ॥६२॥

पादयोरनुगौ चापि हस्तौ कार्यौ प्रयोक्तृभिः ।
प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ॥६३॥

विसर्जितजनस्तत्र तथा दूतीसमन्वितः ।
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः ॥६४॥

वेनामदृग्नवश्यस्य निवृत्तस्तु शनैं शनैं ।
स्वदमास्मृत्सुकस्यापि पश्चाल्लोकनतत्पर ॥६५॥

वेपमानशरीरस्य प्रस्खलंस्तु मुहुर्मुहुः ।
शङ्कित पुरुषो गच्छेद्दिदृक्षुर्वल्लभ जनम् ॥६६॥

उत्तमानामिय कार्या पुरुषाणा गतिर्बुधै ।
मध्यमाना गति चैव सम्प्रवक्ष्याम्यह पुन ॥६७॥

ज्वरार्ते च क्षुधार्ते च तप श्रान्ते भयान्विते ।
विस्मिते छन्नगमने रतबाहुल्ये तथैव च ॥६८॥

चिन्तान्विते तथा स्वस्थ औत्सुक्ये सहर्षे तथा ।
गति स्थिरतया कार्या करताभ्यवभाविनी ॥६९॥

भये वित्रासिते चैव प्रमत्ते शङ्किते तथा ।
व्याधिते हर्षिते क्रोधे कार्यं तु चतुरस्त्रितम् ॥७०॥

स भ्रमाद्भुजग दृष्टे मुहुर्मुहुरवेक्षणं ।
कम्पनेन च गात्राणां वस्त्रस्याकर्षणेन च ॥७१॥

मृगयिता चूर्णपदा शकारस्य गतिर्भवेत् ।
स्थूलस्याकारे तु कर्तव्या गतिर्देहानुकर्षिणी ॥७२॥

समुद्भ्रान्तनगात्रा च विलम्बितपदक्रमा ।
विष्कम्भगामिनी चैव निश्वासबहुला तथा ॥७३॥

अतिक्रान्ता च कर्तव्या तथा चूर्णपदं सदा ।
कार्या चैव तु हीनानां चेटदासीनां द्विजोत्तमाः[1] ॥७४॥

अधमा इति ये ख्याता नानाशीला प्रवृत्तय ।
पार्श्वमेकं शिरश्चैव कर चरणेनैव च ॥७५॥

नामयेत्तद्गुणो विविरकुत्सना चेटमलिन ।
जातिनीचेषु कर्तव्या विनोन्नतपरा गति ॥७६॥

विकला वक्रसंचारा गात्रं सर्वं नियम्य च ।
स्वजातिसदृशी चैव तथा देहानुकर्षिणी ॥७७॥

संभ्रमे चैव हर्षे च विक्षिप्तपदविक्रमा ।
आसाद्य हास्यं तु रसमेताश्चान्याश्च योजयेत् ॥७८॥

पुनश्च करुणे कार्या गतिः स्थिरपदक्रमा ।
सबाष्प साश्रुनयनः स्रस्तगात्रस्तथैव च ॥७९॥

उत्क्षिप्तपातितकरः तथा सस्वनरोदनं ।
गच्छेदयाप्यधिकया प्रत्यग्राप्रियसंभयात् ॥८०॥

एषा स्त्रीषु प्रयोक्तव्या नीचसत्त्वेषु चैव हि ।
उत्तमानां तु कर्तव्या सबाष्पा धैर्यसंयुता ॥८१॥

निःश्वासैरायतोत्सृष्टैस्तथा चोर्ध्वनिरीक्षणं ।
न तत्र सौष्ठवं कार्यं न प्रमाण यथोचितम् ॥८२॥

अत्युत्क्षिप्तैः पदैर्गच्छेदिष्टबन्धुनिपातने ।
गाढ़े प्रहारे कार्या च शिथिलाङ्गभुजाश्रया ॥८३॥

विघूर्णितशरीरा च गतिश्चूर्णपदैरथ ।
गति काञ्चुकिनी प्रोक्ता वयोऽवस्था विशेषतः ॥८४॥

वृद्धे वा मध्यमे च वापि तथा चैव कनीयसी ।
अर्धतालोत्थितैः पादैर्विष्कम्भैर्ऋजुभिस्तदा ॥८५॥

उद्वहन्निव गात्राणि पङ्कमग्न इव व्रजेत् ।
अथ वृद्धस्य कर्तव्या गतिः कम्पितदेहिका ॥८६॥

विष्कम्भितगतिप्राणा मन्दोत्क्षिप्तपदा तथा ।
शीतेन चाभिभूतस्य वर्षेणाभिहतस्य च ॥८७॥

गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतौ सदा ।
पिण्डीकृत्य च गात्राणि तथा चैव प्रकम्पनात् ॥८८॥

करौ वक्षसि निक्षिप्य कुब्जहा तथैव च ।
दन्तोष्ठस्फुरणाच्चैव चिबुकस्य प्रकम्पनात् ॥८९॥

शनैः शनैश्च कर्तव्या श्रोतार्ताभिनये गतिः ।
उत्थे चापि प्रयोक्तव्या गतिर्हासमायुता ॥९०॥

नेत्रस्य कोचनस्वेदगात्रस हृष्टाश्रिता ।
अतिशान्तेरपकान्तैरेसकार्याङ्गितैस्तथा ॥९१॥

अङ्गैरभिनयैर्युता तथा चर्मवरैरपि ।
एतानन्याश्च युञ्जीत नाट्यज्ञं करुणे रसे ॥९२॥

रौद्रे रसे प्रवक्ष्यामि दैत्यरक्षोगणान् प्रति ।
एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमा ॥९३॥

नेपथ्यरौद्रो विज्ञेय स्वाङ्गरौद्रस्तथैव च ।
अथ स्वभावजश्चैव त्रिधा रौद्रं प्रकीर्तितं ॥९४॥

रुधिरक्लिन्नदेहो यो रौद्राभिविकृताननं ।
तथा पिशितहस्तश्च रौद्रो नेपथ्यजस्तु सः ॥९५॥

बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ।
स्थूलकायश्चातिप्रांशुरङ्गरौद्रस्तु स स्मृतः ॥९६॥

रक्ताक्ष पिङ्गकेशश्च कृष्णाङ्गो विकृतस्वरः ।
रौद्रनिर्भर्त्सनकथो रौद्रोऽयं स्यात्स्वभावजः ॥९७॥

पतुस्तालान्तरोत्क्षिप्तैः पादैस्यन्तरपातितैः ।
गतिरेव प्रकर्तव्या शेषा ये चापि तद्विधाः ॥९८॥

एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमा ।
विग्रहः प्रहसश्चैव तथा शृङ्गार इष्यते ॥९९॥

तथा भयानके चापि गतिः कार्याः विचक्षणैः ।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिता ॥१००॥

विस्फारितचलन्नेत्रो विधुन्वन् स्वशिरस्तथा ।
भयाकुलितचित्तत्वात्पार्श्वानि च विलोकयन् ॥१०१॥

द्रुतैश्चूर्णपदैश्चैव कृत्वा हस्तं कपोतकम् ।
प्रलेपितशरीरस्तु शुष्कोष्ठश्च स्खलन् व्रजेत् ॥१०२॥

एवानुकरणे कार्या तर्जने कलहे तथा ।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतस्वरम् ॥१०३॥

एषा स्त्रैणा प्रयोक्तव्या नृणां चाक्षिप्तविभ्रमा ।
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ॥१०४॥

एलकाक्रीडितैः पादैरप्युपरिपातितैः ।
एवामेवानुगैर्हंसैर्गतिर्भीतेषु योजयेत् ॥१०५॥

अहृद्या तु मही यत्र श्मशानरणकश्मला ।
गतिस्तत्र प्रकुर्वीत बीभत्साभिनयं प्रति ॥१०६॥

क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ।
अतिक्रान्तैः पदैर्गच्छेज्जुगुप्सितगतिं प्रति ॥१०७॥

तथा वीरे च कर्तव्या पादविक्षेपसंयुता ।
द्रुतप्रचारणाविद्धा नानाचारीसमाकुला ॥१०८॥

पार्श्वाक्रान्तैर्द्रुताविद्धैः सूचीविद्धैस्तथैव च ।
कलातालगतैः पादैरावेगे योजयेद्गतिम् ॥१०९॥

विटस्यापि तु कर्तव्या गतिर्ललितविभ्रमा ।
किंचिदाकुञ्चितैः पादैस्तालाभ्यन्तरपातितैः ॥११०॥

अङ्गसौष्ठवसंयुक्तं तथा हस्तौ कटिस्थितौ ।
खटकावर्धमानौ च कृत्वा कार्या विटे गतिः ॥१११॥

कृशाङ्गाना [illegible] कर्तव्या गतिर्मन्दपरिक्रमा ।
व्याधिग्रस्तोज्वरार्तश्च तपश्श्रान्तः क्षुधान्वितः ॥११२॥

विष्टम्भनगतप्राणस्तथा क्षामोदरः सदा ।
क्षामस्वरकपोलश्च सन्नगात्रस्तथैव च ॥११३॥

हस्तपादसमुत्क्षेप शनैस्तत्र प्रयोजयेत् ।
कम्पन चैव गात्राणां स्खलन चैव योजयेत् ॥११४॥

प्रकर्तव्याप्यगस्यापि गतिर्मन्दपरिक्रमा ।
विकूणनेन वक्त्रस्य जानुनोश्च विमर्शनात् ॥११५॥

नीचानां मध्यमानां च गति कार्या सदा बुधै ।
तालमात्रोत्थितै पादैस्तथा व्याकुञ्चिताञ्चितै ॥११६॥

प्रव्रजितास्त्वाश्रमस्था ये ये चान्ये तपसि स्थिताः ।
स्वपरस्तापसाश्चैव नैष्ठिक व्रतमास्थिता ॥११७॥

भवेत्तेषाम् स्यास्चैव युगमात्रनिरीक्षणे ।
उपस्थितस्मृतिश्चैव गात्र सव नियम्य च ॥११८॥

अचञ्चलमनाश्चैव गच्छेल्लिङ्गसमाश्रित ।
विनीतवेषश्च तथा काषायवसनोऽपि च ॥११९॥

प्रथम समपादेन स्थित्वा स्थानेन नाट्यवित् ।
हस्त चतुरक कृत्वा तथा चतरश्रसारयेत् ॥१२०॥

प्रसन्न वदन कृत्वा प्रयोगस्य यथानुगम् ।
सुनियम्येन पात्रेण गति कुर्याद्यतेस्तथा ॥१२१॥

उत्तमानां भवेदेषा लिङ्गिनां ये महात्मना ।
एभिरेव विपर्यस्तैर्गुणैरन्येषु लिङ्गिषु ॥१२२॥

तथा व्रतानुगा च स्याद्येषां लिङ्गिनां गति ।
हस्तौ तदनुगौ चापि यथायोग प्रयोजयेत् ॥१२३॥

विभ्रान्ता वा प्रशान्ता च विक्रान्ता विद्रुता तथा ।
शाकटास्यस्थितै पादैरतिक्रान्तैस्तथैव च ॥१२४॥

कार्या पाशुपतानां च गतिरुद्भ्रान्तगामिनी ।
एव लिङ्गस्थितानां हि प्रयोज्यैव गतिर्बुध ॥१२५॥

अन्धस्येव गतिं कुर्यादन्धकारेषु योगवित् ।
भूमौ विसर्पितं पादैर्हस्तदर्शितमार्गकैः ॥१२६॥

रथस्थस्यापि कर्तव्या गतिश्चूर्णपदक्रमा ।
समपादन्तथा स्थानं कृत्वा रथगतिं व्रजेत् ॥१२७॥

धनुरेकेन हस्तेन गृहीत्वान्येन सायकम् ।
सूतश्चास्य भवेदेवं प्रतोदप्रग्रहाकुलः ॥१२८॥

करणानि विचित्राणि कर्तव्यानि विभागतः ।
द्रुतं हचूर्णपदैश्चैव गन्तव्यं रङ्गमण्डलम् ॥१२९॥

विमानस्थस्य कर्तव्या गती रथगतोपमा ।
आरोदुमुद्वहेद्गात्रं किंचिरस्यादुन्मुखस्तथा ॥१३०॥

तस्यैव विपरीतेन कुर्याच्चाप्यवरोहणम् ।
अधोऽवलोकनेनैव मण्डलावर्तनेन च ॥१३१॥

आकाशगमने चैव कर्तव्यं गतिचेष्टितम् ।
स्थानेन समपादेन तथा चूर्णपदैरथ ॥१३२॥

व्योम्नस्त्ववतरेद्यस्तु तस्येमां कारयेद्गतिम् ।
ऋजुवामतोन्नतनतं कुटिलावर्तितैस्तथा ॥१३३॥

भ्रममाणस्य चाकाशादवपत्द्भुजागतिः ।
विकीर्णवसना चैव तथा भूगतलोचना ॥१३४॥

द्रुमग्रामाद्रिशैलेषु नदीनिम्नोन्नतेषु च ।
आरोहणावतरणं कार्यमर्थवशाद्बुधैः ॥१३५॥

प्रासादारोहणं कार्यमतिक्रान्तैः पदैरथ ।
*उद्वाह्य गात्रमूर्ध्वं च सोपाने निक्षिपेद् बुधः ॥१३६॥*

तथावतरणे चैव गात्रमानम्य रेचयेत् ।
व्यतिक्रान्तेन पादेन द्वितीयेनाञ्चितेन च ॥१३७॥

प्रासादारोहणं यत्तु तद्द्रुमाद्रिषु कारयेत् ।
केवलं तूर्ध्वविक्षेपमङ्घ्रिप्लवङ्गं भवेदथ ॥ १३८॥

द्रुमे चारोहण कार्यमतिक्रान्तोत्थितं पदं ।
सूचीविद्धं रथक्रान्तं पार्श्वक्रान्तंस्तथैव च ॥१३९॥

एव देवावतरण प्रयोज्य सरिदादिषु ।
प्रसादेषु तथा प्रोक्त तथैवोत्तरण भवेत ॥१४०॥

द्रुमप्रासादशैलांश्च सञ्ज्ञामात्रेण दर्शयेत् ।
जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् ॥१४१॥

तोयेऽल्पे वसनोत्कर्ष. प्राज्ये पाणिविकर्षणं ।
किंचिन्नतापकाया तु प्रतारे गतिरिष्यते ॥१४२॥

प्रसार्य बाहुमेकंक मुहुर्वारिविकर्षणं ।
तिर्यक्प्रसारिता चैव ह्रियमाणा स्ववारिणा ॥१४३॥

अगाधाम्भाकुलाधूतवदना गतिरिष्यते ।
नौस्थस्यापि प्रयोक्तव्या द्रुतंचूर्णपदंगति ॥१४४॥

अनेनैव विधानेन कर्तव्य गतिचेष्टितम् ।
सञ्ज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम् ॥१४५॥

अङ्कुशग्रहणान्नाग प्रग्रहग्रहणाद्रथम् ।
खलीनग्रहणादश्व नाव चैवावरोहणात् ॥१४६॥

अश्वयाने गति कार्या वैशाखस्थानकेन तु ।
तथा चूर्णपदैश्चैव द्रुतैश्च परिसर्पितैः ॥१४७॥

पन्नगानां गति कार्या पादं स्वस्तिकसस्थितं ।
पार्श्वोत्क्रान्तक्रम कृत्वा स्वस्तिकं योजयेत्तथा ॥१४८॥

मत्तानां तु गति कार्या तदन्ने मध्यमे पदे ।
वामदक्षिणपादाभ्यां घूर्णनापसर्पणात् ॥१४९॥

आकाशस्खलितं- प्राय: पादस्याप्यनवस्थितं ।
विघूर्णितशरीरा च करं. प्रचलितंतथा ॥१५०॥

उन्मत्तस्यापि कर्तव्या गतिस्त्वनियतक्रमा ।
बहुचारीसमायुक्ता लोकानुकरणाश्रया ॥१५१॥

रूक्षस्फुटितकेशस्तु रेणुध्वस्ततनुस्तथा ।
अनिमित्तप्रकथनो बहुभाषी विकारवान् ॥१५२॥

प्रगीतहसितश्चापि नानाविकृतभूषणः ।
नृत्ते गीते च वाद्ये च भाषणे च सदा रत ॥१५३॥

कदाचिद्धावति जवात्कदाचिदवतिष्ठते ।
कदाचिदुपविष्टस्तु शयानश्च कदाचन ॥१५४॥

नानाचीरधरश्चैव रथ्यास्वनियतालयः ।
उन्मत्ताभिनयस्त्वेवं तज्ज्ञैः कार्य्येवंगतिम् ॥१५५॥

स्थित्वा नूपुरपादेन दण्डपादं प्रसारयेत् ।
कृत्वा चारीं तथोद्भ्राम्य स्वस्तिकमेव च ॥१५६॥

अनेन चारीयोगेन परिभ्राम्य तु मण्डलम् ।
चक्रं तु भ्रमणं चैव रङ्गकोणेषु योजयेत् ॥१५७॥

त्रिकं सन्नमितं कृत्वा लताख्यं हस्तमेव च ।
विपर्ययगतैर्हस्तैः पार्श्वैर्हंसगति व्रजेत् ॥१५८॥

सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभिः ।
या कृता नरसिंहेन विष्णुना प्रभविष्णुना ॥१५९॥

आलीढस्थानकं कृत्वा गात्रं तस्यैव चानुगम् ।
ऊर्ध्वंजानु च विक्षिप्य करमेकं च सस्थितम् ॥१६०॥

विप्रेलित शिर कृत्वा चिबुकं बाहुमस्तके ।
गन्तव्य विश्रमैश्चैव पञ्चतालान्तरस्थितं ॥१६१॥

नियुद्धे संश्रये चैव रङ्गावतरणे तथा ।
सिंहादीनां च योक्तव्या गतिरेषा प्रयोक्तृभिः ॥१६२॥

शेषाण्यर्थयोगेन स्थानान्यपि तु कारयेत् ।
गजवाजिरथादींस्तु चिह्नमात्रेण कारयेत् ॥१६३॥

वाहनार्थप्रयोगेषु रङ्गावतरणेषु च ।
एवमेता प्रयोक्तव्या नृणां तु गतयो बुधैः ॥१३४॥

अत्र नाभिहिता यास्तु विज्ञेया शास्त्रनोक्ता ।
अत ऊर्ध्वं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ॥१६५॥

स्त्रीणां स्थानानि कार्याणि गतिप्रचारप्रयोगेषु च ।
आयतं चावहित्थं च तथाश्वक्रान्तमेव च ॥१६६॥

दक्षिणस्तु समः पादस्त्र्यश्रः पक्षस्थितोऽपरः ।
वामो नतः कटीपार्श्वमायतस्थानकं भवेत् ॥१६७॥

वामः स्वाभाविको यत्र पादो विरचितस्ततः ।
तालमात्रान्तरे न्यस्तस्त्र्यश्रः पक्षस्थितोऽपरः ॥१६८॥

प्रसन्नमाननमुरः समं यत्र समुन्नतम् ।
लतानितम्बगौ हस्तौ ज्ञेयं स्थानं तदायतम् ॥१६९॥

रङ्गावतरणारम्भे पुष्पाञ्जलिविसर्जनम् ।
मन्मथेर्ष्योद्भवे कोपस्तर्जनाङ्गुलिमोटनम् ॥१७०॥

निषेधगर्वगाम्भीर्यमौनमानावलम्बनम् ।
स्थानेऽस्मिन् सन्निधीयेत दिगन्तरनिरूपणम् ॥१७१॥

आवाहने विसर्गे च तथा निर्वर्णने च ।
चिन्तायामवहित्थे च स्थानमेतत् प्रयोजयेत् ॥१७२॥

समो यत्र स्थितो वामस्त्र्यश्रः पक्षस्थितोऽपरः ।
वामोन्नतं त्रिकं यस्मिन्नवहित्थं तदुच्यते ॥१७३॥

स्थानमेतत्तु नारीणां सल्लापे तु स्वभावजे ।
निश्चये परितोषे च वितर्के लज्जिते तथा ॥१७४॥

एकः समस्थितः पाद एकश्चाग्रतलाञ्चितः ।
सूचीविद्धमविद्धं वा तदश्वक्रान्तमुच्यते ॥१७५॥

स्खलिते घूर्णिते चैव स्खलिताम्बरधारणे ।
विश्रासने सललिते स्थानमेतत् रक्षणे ॥१७६॥

शाखावलम्बने कार्यं स्तवकग्रहणे तथा ।
विश्रान्तिषु तथैव स्यात्पादताडन एव च ॥१७७॥

स्थानकं तावदेव स्याद्यावच्चेष्टा प्रवर्तते ।
भग्नं च स्थानकं मुक्ते चारी चेत्समुपस्थिता ॥१७८॥

एवं स्थानविधिं कार्यं स्त्रीणां सम्यग्द्विजोत्तमा ।
पुनरासां प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिता ॥१७९॥

कृत्वावहित्थं स्थानं वाम चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य सव्य च खटकामुखम् ॥१८०॥

तत सललितं पादं तालमात्रं समुत्थितम् ।
दक्षिणं वामपादस्य बाह्ये पार्श्वे विनिक्षिपेत् ॥१८१॥

तेनैव समकालं च लतास्यं वामकं भुजम् ।
दक्षिणं च नतं पार्श्वे न्यसेन्नाभितटे तत ॥१८२॥

नितम्बे दक्षिणं कृत्वा हस्तं चोद्वेष्ट्य वामकम् ।
ततो वामपदं दद्याल्लताहस्तं च दक्षिणम् ॥१८३॥

लीलयोद्वाहितेनाथ शिरसानुगतेन च ।
किंचिन्नतेन चाङ्गेन गच्छेत्पञ्चपदीं तत ॥१८४॥

यो विधि पुरुषाणां तु रङ्गपीठपरिक्रमे ।
स एव प्रमदानां तु कर्तव्यो नाट्ययोक्तृभि ॥१८५॥

षट्कलं न प्रयोक्तव्यं तथाप्यष्टकलमेव च ।
पादस्य पतनं तज्ज्ञं खेदजं तद्भवेत् स्त्रिया ॥१८६॥

सयौवनानां नारीणां कार्या त्वेवं गतिर्बुधैः ।
स्थानीया या स्त्रियस्तासां संप्रवक्ष्याम्यहं गती ॥१८७॥

कृत्वाऽवहित्थं स्थानं तु वामं न्यस्य कटीतटे ।
आद्यं चारालमुत्तानं कुर्यान्नाभिस्तनान्तरे ॥१८८॥
न निषण्णं न च स्तब्धं न चैव परिवाहितम् ।
कृत्वा गात्रं ततो गच्छेत्तेनैवाद्यक्रमेण तु ॥१८९॥
प्रेष्याणामपि कर्तव्या गतिर्विभ्रान्तगामिनी ।
किंचिदुन्नमितैर्गात्रैराविद्धपदविक्रमा ॥१९०॥
स्थानं कृत्वावहित्थं तु वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य सव्यं च कटकामुखम् ॥१९१॥
अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ।
उदात्तललितैर्गात्रैः पादैर्लीलासमन्वितैः ॥१९२॥
या मयाभिहिता पूर्वमुत्तमानां गतिर्बुधाः ।
स्त्रीणां वा पुरुषाणां च ततोऽर्धार्धं च कारयेत् ॥१९३॥
उत्तमाधममध्यानां नृणां यद्गतिचेष्टितम् ।
स्त्रीणां तदेव कर्तव्यं ललितं पदविक्रमं ॥१९४॥
बालानामपि कर्तव्या स्वच्छन्दपदविक्रमा ।
न तस्यां सौष्ठवं कार्यं न प्रमाणं तथाविधम् ॥१९५॥
तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसका ।
नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ॥१९६॥
विपर्यस्तप्रयोगस्तु पुरुषस्त्रीनपुंसके ।
स्वभावमात्मनस्त्यक्त्वा परभावेन योजयेत् ॥१९७॥
निजां प्रकृतिमुत्सृज्य क्रीडया वञ्चनेन वा ।
स्त्री पुंसः प्रकृतिं कुर्यात्स्त्रीभावं पुरुषोऽपि वा ॥१९८॥
सौष्ठवेनाथ सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ।
स्त्री पुमांसं ह्यभिनयेद्वेषवाक्यविचेष्टितैः ॥१९९॥
स्त्रीवेषभाषितैर्युक्तः प्रेक्षितप्रेक्षितस्मितैः ।
मृदुसन्नगतिश्चैव पुमान् स्त्रीभावमाचरेत् ॥२००॥
जातिहीनास्तु या नार्यः पुलिन्दशबराङ्गनाः ।
याश्चापि तासां कर्तव्या तज्जातिसदृशी गतिः ॥२०१॥

पतत्स्थानां तपस्थानां' निकृष्टस्थानां तथा पुनः ।
सम्भ्रान्ता चैव नारीणां समपादं प्रयोजयेत् ॥२०२॥
उद्धता येऽङ्गहाराः स्युर्याश्चार्यो मण्डलानि वा ।
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिताम् ॥२०३॥
अथासनविधिं कार्यं स्त्रीणां नृणां तथैव च ।
नानाभावसमायुक्तं तथैव शयनाश्रयम् ॥२०४॥
स्वस्थं मन्दालसं क्लान्तं हस्तालम्बमपि च ।
विष्कम्भकमुत्कटिकं मुक्तजानु तथासनम् ॥२०५॥
जानुगतं विमुक्तं च स्थानकान्युपवेशने ।
लक्षणं पुनरेतेषां विनियोगं च वक्ष्यते ॥२०६॥
विष्कम्भेनाञ्चितौ पादौ किंचिद्वक्षः समुन्नतम् ।
हस्तौ कट्यूरुविन्यस्तौ स्वस्थे स्यादुपवेशने ॥२०७॥
स्वभावाभिनये चैव तथा स्तम्भोपवेशने ।
प्राविष्टनेषु सर्वेषु भावेष्वेनत्प्रयोजयेत् ॥२०८॥
एकः प्रसारितः निक्षिप्तपादोऽन्यस्त्वासनाश्रितः ।
शिरः पार्श्वगतं चैव स्थानं मन्दालसं तु तत् ॥२०९॥
चिन्तायां च तथौत्सुक्ये निर्वेदे विरहे तथा ।
विषादादिषु चाप्येव स्थानमेतत्प्रयोक्तृभिः ॥२१०॥
सम्प्रनष्टेन्द्रियमना भवेत्क्लान्तोपवेशने ।
प्रसार्य बाहू शिथिलौ तथा चोपाश्रयाश्रितः ॥२११॥
श्रमक्लान्ताभिषादेषु मदे चोपविशेद् बुधः ।
सर्वं पिण्डीकृतैरङ्गैः सन्ताड्य त्रिकजानुकम् ॥२१२॥
व्याधिग्रस्ते च निद्रायां ध्याने चोपविशेन्नरः ।
तथा चोत्कटिकं स्थानं पुनः पार्ष्णिसमागमम् ॥२१३॥
पित्र्ये निवापे जप्ये च सन्ध्यास्वाचमनेषु च ।
आकुञ्चितं पुनश्चैव जानु भूमौ निपातयेत् ॥
प्रियाप्रसादने कार्यं होमादिकरणेषु च ॥२१४॥
चिबुकापाश्रयौ हस्तौ बाहुशीर्षाश्रयं शिरः ।
सम्प्रनष्टेन्द्रियमना विज्ञेयं क्लान्तमासनम् ॥२१५॥

मुण्डासनं तु कर्तव्यं सेनानीयुवराजयोः ।
काष्ठासनं ब्राह्मणानां कुमाराणां कुशासनम् ॥२३०॥

स्थानीया ये तु पुरुषाः कुलविद्याप्रकाशिताः ।
तेषामासनसत्कारः कर्तव्य इह पार्थिवैः ॥२३१॥

समे समासनं चैव मध्ये मध्यं तथासनम् ।
अतिरिक्तेऽतिरिक्तं च हीने भूम्यासनं तथा ॥२३२॥

उपाध्यायस्य नृपतेर्गुरूणां चाग्रतो बुधैः ।
भूम्यासनं तथा कार्यं काष्ठासनमथापि वा ॥२३३॥

नौनागरथयानेषु तथा काष्ठासनेषु च ।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः ॥२३४॥

एवं राजसभां प्राप्य कार्यस्त्वासनजो विधिः ।
प्रकृतीनां तु सर्वासां तथा स्थानसमुत्थितम् ॥२३५॥

पुरुषाणां भवेदेष विधिरासनसंश्रयः ।
स्त्रीणां चैवासनविधिं सम्प्रवक्ष्याम्यतः परम् ॥२३६॥

सिंहासनं महादेव्या राज्ञीनां मुण्डमासनम् ।
पुरोधोऽमात्यपत्नीनां भवेद्वेत्रासनं तथा ॥२३७॥

भोगिनीनां तु कर्तव्यं वस्त्रं चर्म कुशासनम् ।
ब्राह्मणीनां तापसीनां पट्टासनमथापि च ॥२३८॥

वेश्यानामपि कर्तव्यमासनं हि मसूरकम् ।
शेषाणां प्रमदानां तु भवेद्भूम्यासनं बुधाः ॥२३९॥

एवमन्तःपुरे ज्ञेयो बाह्यश्चासनजो विधिः ।
तथा स्वगृहवार्तासु छन्देनासनमिष्यते ॥२४०॥

नियमस्थो मुनीनां तु भवेदासनजो विधिः ।
लिङ्गिनां चासनविधिः कार्यो व्रतसमाश्रयः ॥२४१॥

बृसीमुण्डासनप्रायं वेत्रासनमथापि च ।
होमयज्ञक्रियायां च विप्रेष्वपि च प्रयोजयेत् ॥२४२॥

आकुञ्चितं समं चैव प्रसारितविवर्तिते ।
उद्वाहितं नतं प्रोक्तं शय्यास्थानानि निर्दिशेत् ॥२४३॥

सर्वैराकुञ्चितै रङ्गे गात्रैर्विद्धे तु जानुनी ।
स्थानमाकुञ्चितं नाम शीतार्तानां प्रयोजयेत् ॥२४४॥

उत्तानितमुखं चैव प्रत्यङ्गमुक्तकरं तथा ।
सम नाम प्रसुप्तस्य स्थानकं सविधीयते ॥२४५॥

एकं भुजमुपाधाय सम्प्रसारितजानुकम् ।
स्थानं प्रसारितं नाम सुप्तसुप्तस्य कारयेत् ॥२४६॥

अधोमुखस्थितं चैव विवर्तितमिति स्मृतम् ।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥२४७॥

हस्तोपरि शिरः कृत्वा कर्परस्योभयेव च ।
उद्वाहितं तु विज्ञेयं लीलया शयने विभो ॥२४८॥

ईषत्प्रसारिते जङ्घे यत्र स्रस्तौ करावुभौ ।
आलस्यश्रमखेदेषु नतं स्थानं विधीयते ॥२४९॥

रङ्गे विकृष्टे भरतेन कार्यो ह्यनागते पादगतिप्रचारः ।
मध्ये त्रिकोणेऽथ चतुरश्रके वा स्वैःस्वैरथ वंशकेन निरुन्धन् ॥२५०॥

यथोक्तरूपं प्रथमं तु वेषो वेषानुरूपेण गतिप्रचारः ।
गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः ॥२५१॥

गतिप्रचारस्तु मयोदितोऽयं नोक्तस्तु यः सोऽपि वशेन साध्यः ।
अतः परं रङ्गपरिक्रमस्य वक्ष्यामि कक्ष्यानुगतं विभागम् ॥२५२॥

इति श्रीभरतीये नाट्यशास्त्रे गतिप्रचारो नाम द्वादशोऽध्यायः ॥

□□□

# नाट्यशास्त्रम्

## [1]त्रयोदशोऽध्यायः

ये तु पूर्वं मया प्रोक्तास्त्रयो वै नाट्यमण्डपाः ।
तेषां विभागं विज्ञाय ततः [2]कक्ष्यां प्रयोजयेत् ॥१॥

---

### अभिनवभारती

देशस्य बाह्यान्तरभेदभिन्नां
विभागधर्मां विविधां प्रवृत्तिम् ।
व्यासूत्रयन्दोषविशुद्धिदक्ष-
स्त्रिलोकदृष्टिर्जयतात् यथार्कः ॥

इहाभिनयानन्तरं यद्यपि सर्वा वृत्तिप्रवृत्त्य उद्दिष्टा, सर्वान्ते च रङ्गे (३६) सूचिता कक्ष्या, तच्चतुर्विधाभिनयाभिधानानन्तरमेतदध्यायार्थो वक्तव्य । तथापि प्रत्यभिनयमियमितिकर्तव्यतोपयुज्यते । तदभिधानं विना न वाचिकमेवोक्तं स्यादिति वक्तव्यम् । तदुद्देशे तु सामान्यशब्दत्वान्नास्ति प्रत्येकमुद्देशने इति । तयोर्देशेऽपि च गौरवं स्यात् । अत एव वादिना कक्ष्यादेरपृथग्भावे यो हेतुरुक्तः क्रमोल्लङ्घनादिति तस्यासिद्धत्वं विरुद्धता च, प्रत्युत प्रत्येकप्रसङ्गत्वलाभात्, प्रमस्यापदार्थत्वान्नार्थप्रमाणपरत्वाभ्युपगमे पदार्थत्वाधारत्वमयुक्तं, भूयो वाक्यप्रमाणस्य बाधकाभिधानं तु भट्टलोल्लटेनैव प्रकृते निरस्तं विरोधाभावात्, कक्ष्यस्य च मध्यस्थत्वात् वाचिकरूपप्रयोगहेतुत्वात्, तदनन्तरमवसर एवाभिधानं युक्तम् । तद्द्वारेणाभिनयेऽङ्गतासम्भवात् । तदुद्देशत्रयं वस्तुत्रयं वक्तव्यम् । तत्र प्रथमं कक्ष्याभिधानेऽयमभिप्राय बहु गतिर्गन्तव्यदेशासमत्वात्, देशश्च जलस्थलादि बहुप्रकारविषमादिभेदभिन्नः काव्यार्थगामात्रेणैवेह सम्भवन्नपि प्रयोगस्थाने न सम्भवत्येवेति, तस्य परिहारार्थं कक्ष्यानिरूपणं कर्तव्यम् । अत एव पूर्वाध्यायान्ते उक्तं परिक्रमे गत्युपयोगिनां स्थानविशेषाणां सम्यग्विभागं वक्ष्यामीति । इयमध्यायसङ्गतिरस्य दर्शयितुमाह ये तु पूर्वमिति । तु शब्दाद् दूरत्व पूर्वतायाः सूचयन् द्वितीयाध्यायार्थं स्मारयति । तेषामिति प्रत्येकमित्यभिप्राय. । मण्डपस्य यो विभिन्नो भागोऽन्तररङ्गपीठाख्यस्तं विज्ञाय विभागशो ज्ञात्वा कक्ष्यागत्युपयोगिनं स्थानविशेषं प्रयोजयेत्, विभागेन सम्बन्धं नयेत् । नाट्यदेशानुसारेण प्रकोष्ठं स्वकृतं यो देशोऽभिप्यन्ने तत्रैव चातुराश्रम्यम् । अत एव वामदक्षिणभागयोः कुम्भविन्यास, शिष्टे कक्ष्याविभागः ॥१॥

---

१. KSS. चतुर्दशोऽध्याय ।
२. NS. कक्षा ।

ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते ।
तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः ॥२॥
[1]कक्ष्याविभागो निर्देश्यो रङ्गपीठपरिक्रमात् ।
परिक्रमेण रङ्गस्य [2]कक्ष्या ह्यन्या विधीयते ॥३॥
[3]कक्ष्याविभागे ज्ञेयानि गृहाणि नगराणि च ।
[4]उद्यानारामसरितस्त्वाश्रमा अटवी तथा ॥४॥
पृथिवी सागराश्चैव त्रैलोक्यं सचराचरम् ।
वर्षाणि सप्तद्वीपाश्च पर्वता विविधास्तथा ॥५॥
आलोकश्चैव लोकश्च रसातलमथापि च ।
दैत्यनागालयाश्चैव गृहाणि भवनानि च[5] ॥६॥

---

रङ्गस्य को विभाग इत्याह—ये नेपथ्यगृहद्वारे इत्यादि । पूर्वमिति द्वितीयाध्याये प्रकीर्तिते भाण्डस्य नानातोद्यमहितस्य त्रिपुष्करस्य ।२। तत किमित्याह कक्ष्याविभाग इति । तेन भाण्डेन यदाश्रित आकाशः तद्विषयं यावत् रङ्गपीठपरि निष्क्रमप्रवेशमार्गस्योपयोगी स्थानविभागो निर्देश्य प्रेक्षकानपि सम्यग्विनयेत् । ननु क स्थानविभाग इत्याह—परिक्रमेणेति । परिक्रामत्यनेनेति परिक्रमः पादविहरणविशेषः तदाश्रयस्यापि रङ्गदेशस्य स्थानभेदेनापरिच्छेदः, यथा—'आगाढ़मुद्धतचार', 'अतिवाहनेन चारेण' (१२-१०२) इत्यादिना विशेष तु प्रासादसंचारादिकल्पमस्त्येव ॥३॥

ननु भाण्डवाद्यविनिर्मुक्ते रङ्गपीठदेशे प्रमविशेषस्यानन्तर्भूतिः । अन्येत्याह—कक्ष्याविभाग इत्यादि विशिष्टे शिष्ट देशे स्थानान्तराणि रङ्गपीठानि तानि रचितनगरसरणार्थगुणलक्षणत्वेन पठन्ति । गृहादीनि पृथ्वीसागरादिभेदानुसरदावृतानि सर्वसंग्रहाय त्रैलोक्यमित्युक्तेऽपि स्मरणार्थं वर्णनोद्देश ॥४-६॥

ननु सर्वत्र प्रयोगे सर्वे त्रैलोक्यवर्तिन स्थानभेदात् (भिन्ना गृहा) कि अभाविन । नेति दर्शयति नगरे वेत्यादि । विमानैरनुयाता अटव्यादय साक्षात् ग्राह्या इति वार्तायामपि योज्यते । यत्र-यत्र वार्ता वृत्तान्त इतिवृत्तमायाति प्रवर्तते यत्र

---

१. NS कक्षा ।
२. NS. ह्यन्या कक्षा भवेदिह ।
३. NS. कक्षा ।
४. KSS उद्यानारामसहितो देशो ग्रामोऽटवी तथा ।
५ KSS, NS वनानि च ।

नगरे वा वने वापि वर्षे वा पर्वतेऽपि वा ।
यत्र वार्ता प्रवर्तेत तत्र कक्ष्यां प्रवर्तयेत् ॥७॥
बाह्यं वा मध्यमं वापि तथैवाभ्यन्तरं पुनः ।
दूरं वा सन्निकृष्टं वा [1]देशं तु परिकल्पयेत् ॥८॥
पूर्वप्रविष्टा ये रङ्गे ज्ञेयास्तेऽभ्यन्तरा[2] बुधैः ।
पश्चात्प्रविष्टा [3]विज्ञेयाः कक्ष्याभागे तु बाह्यतः ॥९॥
तेषान्तु दर्शनेच्छुर्यः [4]प्रविशेद्रङ्गमण्डलम् ।
[5]दक्षिणाभिमुखः सोऽत्र कुर्यादात्मनिवेदनम् ॥१०॥

---

तन्मध्ये यो देशविभागस्तमेव प्रवर्तयेत् रङ्गपीठे दर्शयेत् न सर्वमित्यर्थः ।७। विशिष्टे देशे इत्युक्ते स रङ्गपीठस्य विशेषं दर्शयति बाह्यं वेत्यादि । भागत्रितये सति कस्मिंश्चिद्भागे देशादि कल्पयित्वा तत्रैव दूरादिभेदं परिकल्पेत, भूयस्त्वाल्पत्वादि भिन्नेन परिक्रमेण कल्पयेदित्यर्थः ।८। बाह्यादिभेदं निरूपयति पूर्वप्रविष्टा इति । पूर्वभूताः प्रधानभूताः सन्तः पूर्वं ये प्रविष्टास्ते अभ्यन्तरा इति तदधिष्ठितो देशविशेषोऽभ्यन्तरकक्ष्या प्रधानभूतस्तु पूर्वप्रविष्टोऽपि प्रधाने प्रविशति स्वकक्ष्यान्तरयेव । पश्चात्प्रविष्टानां तु स्थानं बाह्यकक्ष्या । ते तु येन स्थानविशेषेण प्राक् प्रविष्टमुपसर्पन्ति स देशो मध्यमा कक्ष्या ॥९॥

एतदुक्तं भवति पूर्वप्रविष्टस्य स्वस्थानं एवेतिवृत्तोचितगृहोद्यानादिविभागः पश्चात्प्रविष्टस्यापि पूर्वप्रविष्टेन सह यावन्न सम्मिलनं, तावत्प्रेक्षायामेव । मध्यमकक्ष्यायां तु गतिपरिक्रमादि तत्समेलनार्थम् । सम्मिलितानां तु कक्ष्याविभागो विच्छिद्यत इति संमेलनं इतिकर्तव्यतामाह तेषां त्विति । पूर्वप्रविष्टानां कर्मणि षष्ठी । पूर्वं प्रविष्टस्य यो दक्षिणो भागस्तं वीक्षमाणः स्थितो यथा प्रेक्षकस्य य पराङ्मुखीभवनीत्यर्थः । एष प्रवृत्तये दाक्षिणात्यादिके क्रमः एतद्विपरीतमन्यत्र । प्रवृत्त्यवयवोद्भावितं क्रममत्रशब्देन सूचयति । तेनेदमाह प्राधान्येनोत्तराभिमुखं दक्षिणस्यामात्मनिवेदनं यथावदितिवृत्तवशात्तादृङ् निबध्यते । पूर्वप्रविष्टैः सह सम्मिलितस्य सर्वं बाह्यकक्ष्यामात्रमेवेति तुशब्दस्यार्थः ।१०। का त्विह पूर्वा दिगित्याह यतोमुखमिति समस्तं पदम् । यदपेक्ष भाण्डस्य मुखं सा दिक् पूर्वा । ननु भाण्डस्य मुखं दुर्ज्ञानमित्याह

---

१. KSS. देशात् ।
२. KSS., NS अभ्यन्तरे ।
३. NS. ते ज्ञेया ।
४. NS. मत् ।
५. GOS. दक्षिणाभिमुख ।

आकाशेन विमानेन माययाप्यथ वा पुनः ।
विविधानि क्रियाभिर्वा नानार्थाभिः प्रयोगतः ॥१९॥

नाटके छन्नवेषाणां दिव्यानां भूमिसञ्चरः ।
मानुषे कारणादेषां यथा भवति दर्शनम् ॥२०॥

[भारते त्वथ हैमे वा हरिवर्षे इलावृते ।
रम्ये किंपुरुषे वापि कुरूत्तरकेषु वा] ॥२१॥

दिव्यानां छन्दगमनं [1]सर्ववर्षेषु कीर्तितम् ।
भारते मानुषाणाञ्च गमनं संविधीयते ॥२२॥

[2]अङ्केऽपि विकृष्टस्तु देशकालवशान्तरः ।
अङ्कच्छेदे तमन्यस्मिन् निर्दिशेद्धि प्रवेशके ॥२३॥

अह्नः प्रमाणं गत्वा तु कार्यलाभं विनिर्दिशेत् ।
तदानाने तु कार्यस्य अङ्कच्छेदो विधीयते ॥२४॥

क्षणो मुहूर्तो यामो वा दिवसो वापि नाटके ।
एकाङ्के संविधातव्यो बीजस्यार्थवशानुगः ॥२५॥

अङ्कच्छेदे तु निर्वृत्तं मासं वा वर्षमेव वा ।
नोर्ध्वं वर्षात्प्रकर्तव्यं कार्यमङ्कसमाश्रयम् ॥२६॥

एवन्तु भारते वर्षे कर्तव्या कार्या प्रयोगतः ।
मानुषाणां गतिर्या तु दिव्यानान्तु निबोधत ॥२७॥

---

इत्यादिभिः [illegible] कार्येति भवन्ति ।१९। न च दिव्यानामेव एवं प्रकारः, किं तु [illegible] नाटक इति । [illegible] चतुर्दशवर्षे । तेन [illegible] देवानां मनुष्ये दर्शनं भवति, यथा नाटके [illegible] भूमिसञ्चरः [illegible] भूमिरेव ।२०। वर्ष तु देवेषु [illegible] दिव्यानामिति । पुरुषेषु [illegible] इति न [illegible] ।२१। वर्षे प्रकाराद् हैमवता इति । हिमवति [illegible]

---

1. KSS. वर्षान्तरेषु कारयेत् ।
2. GOS. विकृष्टं यत्तु [illegible] देशं कार्यवशान्तरः ।

हिमवत्पृष्ठमध्ये तु कैलासे पर्वतोत्तमे ।
यक्षाश्च गुह्यकाश्चैव धनदानुचराश्च ये ॥२८॥
[1]रक्षःपिशाचभूताश्च सर्वे हैमवताः स्मृताः ।
हेमकूटे च गन्धर्वा विज्ञेयाः साप्सरोगणाः ॥२९॥
सर्वे नागाश्च निषधे शेषवासुकितक्षकाः ।
महामेरौ त्रयस्त्रिंशद् ज्ञेया देवगणा बुधैः[2] ॥३०॥
नीले तु वैडूर्यमये [3]सिद्धा ब्रह्मर्षयस्तथा ।
दैत्यानां दानवानाञ्च श्वेतपर्वत इष्यते[4] ॥३१॥
पितरश्चापि विज्ञेयाः शृङ्गवन्तं समाश्रिताः ।
इत्येते पर्वताः श्रेष्ठा दिव्यावासाः प्रकीर्तिताः[5] ॥३२॥
तेषां [6]कक्ष्याविभागश्च जम्बूद्वीपे भवेदयम् ।
तेषां न चेष्टितं कार्यं स्वैः स्वैः कर्मपराक्रमैः ॥३३॥
परिच्छ(च्छे)दविशेषस्तु तेषां मानुषलोकवत् ।
सर्वे भावाश्च दिव्यानां कार्या मानुषसंश्रयाः ॥३४॥

---

नैषा गतिरिति[illegible] एव सर्वत्र ।२८।३०। नील इति [illegible] वैडूर्यमये, एतच्च [illegible] ।३१। दिव्यानां [illegible] ।३२। ननु पर्वतान्तरेषु दिव्यपर्वतेषु [illegible] गमनं [illegible] कथमित्याह तेषामिति । [illegible] इत्यर्थः । जम्बूद्वीप इव दिव्यपर्वतेष्वपि । दिव्यानामपि [illegible] स्थानविशेषा[illegible] गतिरित्यर्थः । एतत् स्फुटयति न तेषामिति ।३३। परिच्छदविशेष [illegible] परिवार [illegible] न कार्यं इत्यर्थः । परिच्छेदो [illegible] न प्रदर्शनीयम् । [illegible] तर्हि [illegible] मानुषेति मानुष[illegible] मानुषलोकवत् यथा मानुषे [illegible] ।३४। न [illegible] एव तेषां [illegible] कार्यम् । [illegible]

---

१. NS रक्षोभूतपिशाचाश्च ।
२. KSS. तथा ।
३. KSS. सिद्धब्रह्मर्षयस्तथा ।
४. NS उच्यते ।
५. NS दिव्यावासा भवन्ति हि ।
६. NS. कक्ष्या ।

¹नेपथ्यविनियतश्च यत्तन्न कार्यं प्रयोक्तृभिः ।
इह भावा रसाश्चैव ²दृष्टावेव प्रतिष्ठिता ॥३५॥

दृष्ट्या हि सूचितो भाव ³पुनरङ्गैर्विभाव्यते ।
[एवं कक्ष्याविभागस्तु मया प्रोक्तो द्विजोत्तमा ?] ॥३६॥

पुनश्चैव प्रवक्ष्यामि प्रवृत्तीनां तु लक्षणम् ।
चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोगत⁴ ॥
आवन्ती दाक्षिणात्या च पाञ्चाली चोड्रमागधी ॥३७॥

---

चारिणो, रसा स्थायिनो दृष्टावेवेति दृष्ट्यामिति व्याख्यति । दृष्ट्येति सूचितं सूचाभिनय एव विभाव्यते विभावादिविशेषयुक्तत्वे स्फुटो भवतीत्यर्थः । अत एव न तेषां चेष्टितमित्यनेन साध्योऽप्ययमर्थं पुनरुक्तः प्राधान्यात् ॥३६॥

एवं सर्वोपकारित्वादुद्देशस्य सङ्ग्रहं सर्वं पश्चादभिधानं तेनैव न यद्यपि कक्ष्याविभागः सूचितस्तथापि चारीतरिक्रमप्रसङ्गेन मत्स्याध्यायानन्तरं दर्शितः । इदानीं स्वाङ्गिकौत्पत्तिकस्याभिनयमुद्दिष्टं, तत्र वृत्तीनामग्रतो निरूपणं भविष्यति, तत्र च हेतुं वृत्त्यध्याय (अ-२०) एव वक्ष्याम । यद्यपि धर्मी पूर्वमुद्दिष्टा तथापि यत्र वार्ता प्रवर्तेत' (१३-७) इत्यनेन कक्ष्याविभागकल्पितवेशभेदाभिधानप्रसङ्गेन च देशविभाग-प्रतिपन्ना प्रवृत्तय आक्षिप्ताः । किं च पात्रस्य गति प्रवेशे कक्ष्याविभाग उत्तरद्वारेण दक्षिणात्यावन्त्यो प्रवेशः; अन्ययोस्तु सव्येनेत्येव प्रवृत्तिविभागः प्रवेशभेदमाक्षिपति । सोऽपि तस्याभिनेदमिति तदुपयोगित्वेनापि समनन्तरं प्रवृत्तयो वक्तव्या इति मनसि कृत्वाह चतुर्विधेति । प्रवृत्ति कस्मादिति प्रश्ना । कस्मादिति चतुष्प्रश्न. । अयं तावदाह पृथिव्यामिति । प्रवृत्ति देशविशेषगता वेषभाषाचारवार्ताप्रसिद्धि रुच्यते । तत्रैव योजना देशे देशे येष्वेव वेषादयो नेपथ्य, भाषा वा, आचारो लोकशास्त्रव्यवहारः, वार्ता कृषिपाशुपाल्यादिजीविका इति तान् प्रख्यापयति पृथिव्यादिसर्वलोकविद्याप्रसिद्धिं करोति । प्रवृत्तिर्वार्ताहार्यं यस्मात्निवेदने निर्देशेन वेदने ज्ञाने प्रवृत्तिशब्द । "सम्पैषा भुवने प्रवृत्तिरनघ रामेण रामस्य यत्" इत्यादौ ।

अथ सङ्ख्याप्रश्ने स्वाभिप्रायमाह यथेति देशा इति । तदुक्तत्वापि चतुष्टयी प्रवृत्तिरित्युक्तं न चत्वार एव देशाः । स्यादेतदेव तावत्यस्तावदुक्ता अन्याधिकास्तु त्यक्ता इत्याशङ्क्याह समानलक्षणश्चासां प्रयोग इत्युच्यते महद्भिरिति शेषः । प्रयोग

---

१. NS. तेषामनभिप यत्तु ।
२. NS. दृष्ट्यामेव ।
३. KSS., पुनरङ्गैः । NS. पश्चादङ्गैः ।
४. NS. प्रयोक्तृभिः ।

महेन्द्रो मलयः सह्यो मेकलः पालमञ्जर[1] ।
एतेषु ये श्रिता देशाः स ज्ञेयो दक्षिणापथः ॥३८॥
[2]कोसलस्तोशलाश्चैव कलिङ्गा यवना खसाः ।
द्रविडान्ध्रमहाराष्ट्रा वैण्णा वै वानवासजा[3] ॥३९॥

दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे ।
ये देशास्तेषु युञ्जीत दाक्षिणात्यां तु नित्यशः ॥४०॥
आवन्तिका वैदिशिका सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीरा [4]आवर्ता सार्बुदेयका[5] ॥४१॥
दाशार्णास्त्रैपुराश्चैव तथा वै मार्तिकावता[6] ।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥४२॥

सात्त्वतीं कैशिकीं चैव वृत्तिमेषां समाश्रिता ।
भवेत् प्रयोगो नाट्येऽस्य स तु कार्यं प्रयोक्तृभि ॥४३॥

---

ननु किमित्यय संक्षेप आदृत । आह । यस्माल्लोके यद्विधवेषभाषाचारादि भुवन दृष्टं प्रतिपद यावन् मनुष्यान् शिक्षितुमभ्यस्मितु वा प्रयोक्तु द्रष्टु वा, चित्तवृत्तिप्रधान चेद नाट्यमिति तदेव यावन् न्याय्यम् । एतदेव स्पष्टीकुर्वन्नाह भारतीत्यादिना । प्रयोगे वाग्व्यापारेष्वाश्रु अभिनिवृंत्त लोकप्रसिद्धमित्यर्थः । चकारेण तत्र प्रदर्श्यते । तल्लोकप्रसिद्धचतुष्टयमवलम्ब्य ब्रह्मणा प्रयोग उत्पादित । अथ गत्यविचरन्तर्नैर्वृत्तीनां चतुर्विध दृष्टान्तनामाश्रित्य व्याख्यात, तत्र च वैषम्येण दूषणमुक्तम्, वृत्तीना हि मनिश्रित्त चतुर्धात्वि प्रवृत्तीनां तस्माच्चतुष्टयमात्रेण दृष्टान्तोऽयमिति व्याख्यानेषु गजस्नानीयतया आनयनेनालूनविशीर्णं क्षुन्न इत्यास्ता तावत् ।

कैशिकी प्रायेण एषु इति बहुव्रीहि । असामानाधिकरण्याल्समानाधिकरण्येऽपि वा सामान्ययामाहृत्ये भाषितपुंस्काभावान्न पुंवद्भाव । वेशोनिवृंत्तास्तेषु भवा वैश्यादिव्युत्पत्तिनिमित्तमात्रम् । एतच्च वक्ष्याम संक्षेपेण (अध्या २०) । दक्षिणसमुद्रस्य विन्ध्यपर्वतस्य च मध्ये ये देशास्तेषु दाक्षिणात्या ।३९। एतेनैव सिद्ध सति देशभेदाना प्रतिपदपाठस्तदन्तरालाना पर्वतकच्छादिम्लेच्छानां निषेधेन, प्रसिद्धया देशोपसंग्रहणार्थं कर्तव्यम् । एवमुत्तरत्र ।४१। नित्यमेव त्विति अनादिरयं देश-

---

१ NS, मेघक वालपञ्जर. KSS. मेदार- पलपञ्जर. ।
२. NS. कोशला ।
३. KSS, NS. वानवासिजा. ।
४. NS. आनर्ताः ।
५. KSS. सार्बुदेयकाः ।
६. KSS., NS. वैदर्भिकाश्च ना. ।

आवन्ती दाक्षिणात्या च प्रदक्षिणपरिक्रमे ।
अपसव्यप्रदेशास्तु पाञ्चाली चोढ्रमागधी ॥५२॥
आवन्त्या दाक्षिणात्याया[1] पार्श्वद्वारमथोत्तरम् ।
पाञ्चाल्यामोढ्रमागध्यां योज्यं द्वारन्तु दक्षिणम् ॥५३॥
[2]एकीभूता पुनश्चैता प्रयोक्तव्या प्रयोक्तृभिः ।
[3]पार्षदं देशकालौ चाप्यर्थयुक्तिमवेक्ष्य च ॥५४॥
येषु देशेषु या [4]कार्या प्रवृत्तिः परिकीर्तिता ।
तद्वृत्तिकानि रूपाणि तेषु तज्ज्ञः प्रयोजयेत् ॥५५॥
एकीभूता पुनस्त्वेता नाटकादौ भवन्ति हि ।
अवेक्ष्य वृत्तिबाहुल्यं तत्तत्कर्म समाचरेत् ॥५६॥

---

दक्षिणोत्तरव्यतिरेकेण परिक्रमणस्थानाभावात् नैरट्याद् द्वे प्रवृत्ती एकीकृत्य प्रयोगाभिधानम् । तत्र दाक्षिणात्य उत्तरेण द्वारेण प्रविश्य पश्चिमाया दिशि परिक्रम्य ततोऽपि दक्षिणस्या तत. पूर्वस्या तत, उत्तरस्या परिक्रमेन । परिक्रम्य च तस्यामेव दिश्यात्मनिवेदनं कुर्यात् । तदुक्तं दक्षिणाभिमुख इति । तत उत्तरस्या पूर्वा ततोऽपि दक्षिणा तत पश्चिमा प्राप्योत्तरद्वारेणैव निष्क्रामेत् । एवं सात्वत्यादौ, तद्विपर्ययेण पाञ्चाल्या । तदन्या दक्षिणद्वारेण प्रवेशो निष्क्रमण च प्रदक्षिणेन दक्षिणदिशा प्रवेशोऽन्यन्तरव्यवस्थितपात्रनिकट एवेति स्यात् । एवमपसव्यप्रवेश इति ॥५४॥

विशेषान्तरमाह एकीभूता इति । पार्षदमिति । परिषदि स्वामित्वकृत या प्राधान्य देशकृत कालकृत प्रयोजनकृत बहुतरपात्रपरीक्षायानोचित यद्वैचित्र्य तत्कृत मिदमवेक्ष्य सङ्करोऽपि कर्तव्य, तदाह एकीभूता इति प्रधानानुयायित्व एवेत्यर्थ. ॥५५॥

एव प्रयोक्तरि परिक्रमोपयोग । प्रवृत्तीना प्रत्येकविषयेऽपि त दर्शयन्नाह येषु देशेष्वित्यादि या प्रवृत्तिरित्यर्थ, सा वृत्तिर्येषु रूपकेषु तेषु । तेन काश्मीर देशगत नायक नाटिकानुचिता यस्या कैशिकीप्राधान्ये दाक्षिणात्योचितत्वात् । देशादौ-चित्ये सर्वत्रैव तद्व्यावर्तनेन प्रतीतिविघाताद्रसमयत्वाभाव । रसाश्च नाट्यस्य प्राणा: प्रतीतिरपि वा परैव भवेत् असत्यतागङ्का च समूलघात विहन्यादेव प्रयोग-मित्यनेनाभिप्रायेणाह तद्वृत्तिकानीति । येषु देशेषु यो वृत्तिप्रकार उक्त. स येषु रूपकेषु नाटकादीनामन्यतमेषु भवति, तानि रूपकाणि तेष्विति तद्देशगतनायकप्राधा-न्येन कर्तव्यानि कविना नटेन च ॥५६॥

---

१. KSS , NS. योज्य ।
२. NS. एकभूता ।
३. KSS., NS. वर्ग च देशकालौ च ।
४. KSS., NS. पूर्वम् ।

लोकप्रसिद्धं द्रव्यन्तु यदा नाट्ये प्रयुज्यते।
मूर्तिमत् साभिलापञ्च नाट्यधर्मी तु सा स्मृता ॥७४॥
आसन्नोक्तन्तु यद्वाक्यं न शृण्वन्ति परस्परम्।
अनुक्तं श्रूयते वाक्यं नाट्यधर्मी तु सा स्मृता ॥७५॥
शैलयानविमानानि चर्मवर्मायुधध्वजाः।
मूर्तिमन्तः प्रयुज्यन्ते नाट्यधर्मी तु सा स्मृता ॥७६॥
[य एकां भूमिकां कृत्वा कुर्वीतैकान्तरेऽपराम्।
कौशल्यादेककर्तृत्वाद्धा नाट्यधर्मीति सा स्मृता] ॥७७॥
या गम्या प्रमदा भूत्वा गम्या भूमिषु युज्यते।
गम्या भूमिरगम्या च नाट्यधर्मी तु सा स्मृता ॥७८॥
ललितैरङ्गविन्यासैस्तथोत्क्षिप्तपदक्रमैः।
नृत्यते गम्यते यच्च नाट्यधर्मी तु सा स्मृता ॥७९॥
योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः।
सोऽङ्गाभिनयसंयुक्तो नाट्यधर्मी तु सा स्मृता ॥८०॥
यश्चेतिहासवेदार्थो ब्रह्मणा समुदाहृतः।
दिव्यमानुषरत्यर्थं नाट्यधर्मी तु सा स्मृता ॥८१॥

---

यत्र नियमहेतु लौकिकस्य तत्र नाट्यधर्मी व्यापकत्वमिति बहुतरोदाहरणनिदर्शन दिशा दर्शयितुमाह लोकेति अभियोज्य क्रियासु यद् मूर्तं स्यात् चैतन्यं साभिलाप लोकेऽपि कलाशिल्पिकल्पनाकलितमनन्यदपि मूर्तिसंपादनेन प्रयुज्यते प्रयोग क्रियते। यथा मायापुष्पके "तत प्रविशति ब्रह्मणाप" इति।७४। न शृण्वन्ति जनान्तिकापवारितक्यो। अनुक्तं श्रूयते, आकाशभाषितं, मनादावाकाशादौ।७५। मूर्तिमन्त इति प्रक्रियासु यथेष्टमायतन्त्वात्प्रयुज्यन्त इत्यर्थ। तद्यथा—'अग्रे पर्वत एव पथमत्र गन्तव्यम्" इत्यादि। चर्म भेटकं वसुनन्दादि अपूर्णरूप दारुवस्त्रचित्रादिरूपतया प्रयुज्यते।७६। ललितैरिति आवेष्टितादिचतुर्विधकरणोपगृहीतवर्तनाप्रवर्तितै। उत्क्षिप्तानि यानि पदानि तेषां चतुस्तालादिना (अ ९-२७२-२८६) क्रमात्तालविभागाच्चतुष्कलत्वादय.। च शब्द इवशब्दार्थ.। नृत्यत इव यद् गम्यते नृत्तसदृशी या विलासा सा गतिरित्यर्थ। तद्भावे नटी।७९। एतत्प्राणितमेव नाट्यमित्याह योऽयं स्वभाव इति। अङ्गरागोद्यानादिभिरभिनयैश्च संयुक्तस्य लोकस्य भावानुभावविलासौपयिकत्वेन विधायकस्य नाट्यधर्मीत्वं विधानमिति प्रथमाध्याये (१-११८) श्लोकाद्भिन्नार्थं एवाय तत्र नाट्यलक्षणपरो वाक्यार्थ इति विवृत चैतत्तत्रैवाध्याये।८०। प्रसङ्गोपयोगेन सर्वाभिनयप्रकारसारा नाट्यधर्म्यभिहिता, ता दर्शयति यश्चेति। चतुर. प्रसङ्ग द्योतयति।

उक्तो मयोऽङ्गाभिनयो यथावत् शाखाकृतो यश्च कृतोऽङ्गहारैः[1] ।

पुनश्च वाक्याभिनयं यथावद्वक्ष्ये स्वरव्यञ्जनवर्णयुक्तम् ॥८६॥

[2]इति भरतीये नाट्यशास्त्रे कक्ष्यावृत्तिधर्मीव्यञ्जको नाम त्रयोदशोऽध्यायः ।

अङ्गाभिनयः समाप्तः ।

---

हास्यादौ एव यद्यपि वाक्याभिनय उक्तस्तथापि सति उक्तस्वरूपमभिनेयमिति तदाह यथावदिति, अत एव पुनरुक्तम् । स्वरा अचः । व्यञ्जनानि हलः । वर्णा अज्झल्समुदाया इति शिवम् ।८६।

श्रीभानुमण्डनमनोहरपादपद्मनिष्ठापूर्णपरिपूर्णशिरोरुहेण ।

वृत्तिः कृताभिनवगुप्तपदाभिधेन कक्ष्याङ्कुचितनलक्षणवर्णनेऽस्मिन् ॥

इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचितायां नाट्यवेदविवृतावभिनवभारत्यां कक्ष्याप्रवृत्तिधर्म्यभिधानं (धर्मीव्यञ्जको) नाम त्रयोदशोऽध्यायः ।



१. NS. अङ्गहारः ।

२. KSS. इति भारतीयनाट्यशास्त्रे प्रवृत्तिधर्मीव्यञ्जको नाम चतुर्दशोऽध्यायः ।

अभिनवभारती

न च न भवति शृङ्गारशब्दात्तत्प्रतीतिः शृङ्गारहास्येति (६-१६) श्लोकस्य काकुबाधित देशीयतापत्ते । यथाभवेत हि शब्दात्प्रवर्तमानासिद्ध साध्य चाभिधातु केन प्रति-हन्यत इति साध्यमानता कापि विभीषिका । किंचेदमपि शृङ्गारायते हसति करुणा-यते इत्यादि साध्यशब्दशब्दनीयत्व प्रति किं वक्तव्यं स्यात्, अवश्यं चैतत्, अन्यथा "याते द्वारवतीं" इत्यादौ सोत्कण्ठयेति, उत्कमिति चानुवादो विफल एव स्यात्, तद्रूपास्वने तदनुभावसमार्पणस्याप्ययोगात् । स्थायिव्यभिचारिणा च भेदा-प्रतीतौ—

यान्त्या तया वलितकन्धरमाननं तत्—
आवृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥

इत्यादावनुभावप्रत्ययोऽपि दुर्लभीभवेत् का कथा रसस्य, वलितावृत्तादिधान-खातादीनां कटाक्षशब्दे जीवभूतानां क्रियासु प्रतिपत्तेरभावात् । "लीनेव प्रतिबिम्बितेव लिखितेव" इत्यादावेषैव वार्ता ।

"तथा महासमरसम्भ्याकृतकण्ठग्रह" "वपुरलसलसद्बाहु लक्ष्म्या" "कति-चिदहानि वपुरभूत्केवलमलसेक्षणं तस्याः" ॥

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥

"निद्रानिमीलितदृशो मदमन्थरायाः" "बिभ्रत्यती शैलसुतापि भावमङ्गैः" इत्यादि काव्येषु सहृदयहृदयगतगम्ममुकुलनादाभूताङ्कुरितसिम्वेषु जीवितभूताना हासा-लस्योन्मुखरतिनिद्रामदरागमाभिलापागमादीनां शब्दस्पृष्टत्वेन विभावाद्यनुभाव्यत्वभावेषु वीतरागतेन धर्मार्थशास्त्रत्वमेव स्यात् । सिद्धस्वभावानामेव पदैरभिधानम् । तत्र भवतीति तदनुभवनीतिवचनाव्यस्वभावेनेति चेत्, अन्यतरधर्ममुखेन क्रियान्यस्य धर्मिणो द्वाभ्यामपि यथासङ्केताभ्यर्हाद् द्वितीयधर्मास्पर्शाभ्योभयोरपि तुल्यत्वात् । साध्यतार्थ क्रियायां जीवितमिति चेत्, धर्मद्वयवति धर्मिणि स एषोऽन्यतरधर्मपक्षपातः । न च सिद्धताधर्मोऽस्या नास्ति; तथात्वे वा कदाचिदपि कृतदर्शनं न स्यात् । भवतीति वारोपितगौणीप्रतिपत्तिः स्यात् ।

अपि वलादारोपस्थानस्य चालीनस्यैव केनापि शब्देनास्पृष्टत्वात् तस्यासिद्धा-भिधायिना वा शृङ्गारादिशब्देन स्पृश्यत एव तदर्थः । न तु सर्वो वक्ता सविकल्पति-प्रसङ्गित्वस्वरूपप्रबन्धबन्धुरताव्यतिमानुष्य हि तदिदं, न विम्वृत्ति प्रतिपादकत्वम् ।

अभिनवभारती

वदस्य सतयही यद् वेपते वनीविनम् इति—अत्र रौद्रे भोक्ष्यतीति हृद्यम् । अत्र 'लोचने कदा समाजिष्यति' इति, न तु कदा समाध्यतीति, एवं वैकल्पिकेऽपि आगमे सौन्दर्यात् । अभावपक्षे वा "आश्लिष्य प्रियन इति सुव्यक्तमेव । एवान्तःप्रनीतिनरचेति घटोऽसत्त्वपक्ष एव । आगमेनादेशोऽप्युपलक्ष्यते । मुखाशब्दस्थाने न मूढाशब्द- प्रयोगार्ह: ।

नाम यथा मदनरिपुरिति भगवत्पर्यायश्चेति तदीयशृङ्गारवर्णने न प्रयोज्यम् । आख्यातमपि, किन्तु यद्वैचित्र्यमावहति (तत्प्रयोज्यम् यथा) "स्मरसि स्मर मेखलागुणैः इति वर्तमानप्रत्ययेन तत्कालाकरणमुपलम्भविषयता, त्वमेवात्र साक्षी अनृत न प्रहरित, अन्यथा स्मृतवानिति मेखलागुणैरिति स्यात् । उपसर्गोऽपि प्रकृतार्थयोगी यथा—विधिना न निर्मितः कृता इत्यर्थे न मिति । अधिकद्योतको यथा— मुहुरपनिदं प्रियालुप्यते" इति । उपसर्ग कर्मप्रवचनीया अप्युपलक्ष्यन्ते (यथा) "कः स्यादर्शनात् प्रति", "विधिनो नास्तीति पुनरेव स्यात् । अर्जुनहते विविनामिति ।

मीमांसते हृदयमात्मन एव बाला
नाम्नापि मानरलना सहते न जातु ।

न तु चित्त विचारयत्यात्मन एवेति । एवं मुख्यानुप्रत्ययपद न तत्र इत्यु वाक्यं गौरवभयात् नोदाहृतम् ।

स्त्रीप्रत्ययो यथा—'अभ्यामीन न वैदग्धी कुतीति न तु वैदग्ध्य कृतीति; स्त्रीप्रत्ययेन सौभाग्यातिशयप्रतीते ।

तद्धितपद तद्धितप्रत्ययोपलक्षणम् तद् यथा—"शाश्व व वपुर्यदा" इति न तु समूणा वेति, तद्धितवृत्त्या ह्येकार्थीभावान्वयात् तद्गतामीरूपमपि यशसो स्वयप्राही- षड्गुरित्यर्थं । निपातो यथा—"हा हा हा देवि धीरा भव" । सूचक—आ. ? किमत्र किरातेषेन वान्ति वर्णानिया विशेषेण निरङ्कुशा इति । समासेन एकार्थीभावे यत्र सति वृत्तम् ' यथा—मध्येगङ्गायमुनयनु (नेति ?) न तु मध्ये गङ्गायमुनयोरिति । एवं समासान्तरेषु वाच्यम् । मुद्रेषु मर्हीपेषु चागमादयो निवृत्यन्ता विद्यन्ते यत्रेति मत्वर्थोपि च ।

सन्धिर्द्विधा नैरन्तर्यरूप. इतेपदच—मवनोयेति । विपर्ययेण नैरन्तर्यं अभिधता तत्रास्थिरा इति इतेयं बीभत्साद्यालने । सूत्र याज्ञमिति पृथगपि द्वियुति, मङ्गः पदयोः, नैरपदत्ता, ब्रह्ममूत्रमित्यनुस्वारस्योत्तरसम्प्राप्तिव्यतिरेकेण चात्मनि विश्रान्तिर्यिपुमराक्यत्वादेवपदवङ्गेत्र ।

अकाराद्या स्वरा ज्ञेया औकारान्ताश्चतुर्दश ।
हकारान्तानि कादीनि व्यञ्जनानि विदुर्बुधाः ॥८॥

तत्र स्वराश्चतुर्दश-अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ इति स्वरा ज्ञेयाः ॥

कादीनि व्यञ्जनानि यथा-क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह इति व्यञ्जनवर्गः ।

वर्गे वर्गे समाख्यातौ द्वौ वर्णौ प्राग्व्यवस्थितौ ।
अघोषा इति ये त्वन्ये सघोषाः सम्प्रकीर्तिताः ॥९॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलश्च दन्ताश्च नासिकोष्ठौ च तालु च ॥१०॥

अ कु ह विसर्जनीयाः कण्ठ्याः । इ चु य शास्तालव्याः । ऋ टु र षा मूर्धन्याः । ऌ तु ल सा दन्त्याः । उ पुपध्मानीया ओष्ठ्याः । ≍प≍ फ इति प फाभ्यां प्राक् अर्धविसर्गसदृश उपध्मानीयः ≍क≍ ख इति कखाभ्यां प्राक् अर्धविसर्गसदृशो जिह्वामूलीयः । ए ऐ कण्ठ्यतालव्यौ । ओ औ कण्ठोष्ठ्यौ । वकारो दन्तोष्ठ्यः । ङ ञ ण न मा अनुनासिकाः विसर्जनीयं औरस्यं इत्येके । सर्ववर्णानां मुखं स्थानमित्यपरे ।

द्वौ द्वौ वर्णौ तु वर्गाद्यौ शषसाश्च तथोत्तरे ।
अघोषा घोषवन्तस्तु ततोऽन्ये परिकीर्तिताः ॥११॥
एते घोषाघोषाः कण्ठ्योष्ठ्या दन्त्यजिह्व्यानुनासिक्याः ।
ऊष्माणस्तालव्या विसर्जनीयाश्च बोद्धव्याः ॥१२॥
गघङ जझञ डढण दधन बभम तथैव यरलवा मना घोषाः ।
कख चछ टठ तथ पफ इति वर्गेष्वघोषाः स्युः ॥१३॥
कखगघङाः कण्ठस्थास्तालुस्थानास्तु चछजझञाः ।
टठडढणा मूर्धन्यास्तथदधनाश्चैव दन्तस्थाः ॥१४॥
पफबभमास्त्वोष्ठ्याः स्युः दन्त्या लृलसा अहौ च कण्ठस्थौ ।
तालव्या इचुयशाः स्युः ऋटुरषा मूर्धस्थिता ज्ञेयाः ॥१५॥
ऌलृ दन्त्यौ ओऔ कण्ठोष्ठ्यौ एऐकारौ च कण्ठतालव्यौ ।
कण्ठ्यौ विसर्जनीयौ जिह्वामूलमुद्भव कखयोः ॥१६॥
पफयोरोष्ठस्थानं भवेदुकारः स्वरो विवृतः ।
स्पृष्टाः काद्या मान्ता शषसहकारास्तथा विवृताः ॥१७॥

अन्तस्था सवृता ङञणनमा नासिक्योद्भवा ज्ञेया ।
ऊष्माणश्च शषसहा यरलवर्णास्तथैव चान्तस्था ॥१८॥

जिह्वामूलीय ≍क ≍, प उपध्मानीयसञ्ज्ञया ज्ञेय ।
कचटतपा स्वरिता स्यु खछठथफा स्यु सदा मध्या ॥१९॥

कण्ठ्योरस्यान् विद्यात् घझढधभान् पाठ्यसप्रयोगे तु ।
वेद्यो विसर्जनीयो जिह्वास्थाने स्थितो वर्ण ॥२०॥

एते व्यञ्जनवर्णा समासत सञ्ज्ञया मया कथिता ।
शब्दविधिप्रयोगे स्वरांस्तु भूय प्रवक्ष्यामि ॥२१॥

यस्मिन् स्थाने स समो विज्ञेयो य सवर्णसञ्ज्ञोऽसौ ।
य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र ये दश समाना ।
पूर्वो ह्रस्वस्तेषां परश्च दीर्घोऽवगन्तव्य ॥२२॥

इत्थं व्यञ्जनयोगैं स्वरैश्च साख्यातनामपदविहितैं ।
पाठ्यनिबन्धाश्च स्युर्धातुर्निपातोपसर्गस्तु ॥२३॥

एभिर्व्यञ्जनवर्णैर्नामाख्यातोपसर्गनिपातै ।
तद्धितसन्धिविभक्तिभिरधिष्ठित शब्द इत्युक्त ॥२४॥

[1]पूर्वाचार्यैरुक्त शब्दानां लक्षणं समासयोगेन ।
विस्तरत पुनरेव प्रकरणवशात् सम्प्रवक्ष्यामि ॥२५॥

[[2]अर्थप्रधान नाम स्यादाख्यात तु क्रियाकृतम् ।
द्योतयन्त्युपसर्गास्तु विशेष भावसंश्रयम्] ॥२६॥

तान्प्राहु मध्याविध पद्कारकमपुन प्रथितसाम्यम् ।
[निर्दिष्ट[illegible]प्रभृतिसञ्ज्ञानि ॥२७॥

---

सवर्णसञ्ज्ञ इति । ये येन तुल्यास्ते सवर्णभूताः ।२२। पूर्वापरीभूतह्रस्व-
दीर्घरूपतया स्वराः (भिन्ना अपि अभिन्ना, एकवद्) भान्ति । वक्ष्यमाण [illegible]
इत्यनेन [illegible] [illegible] [illegible] [illegible]-
[illegible] । एवमादि[illegible] नाम ॥२३॥

प्रथित [illegible] वाक्यरेन सम्य ।२५—२६।

---

२. GOS उद्दिष्ट शब्दानां लक्षणमेतत्समासयोगेन ।
प्रकरणवशाद्धि तदहं विस्तरतः सम्प्रवक्ष्यामि ॥

२. NS. does not read it.

नामाख्यातार्थविषयं विशेषं द्योतयन्ति ते ।
पृथक्त्वोपसर्गेभ्यो निपाता नियमेऽच्युते ॥२८॥

सप्रत्ययीतकालक्रियादिसंयोजितं प्रथितसाध्यम् ।
वचनं नामतयुक्तं पुरुषत्रयसंयोजनविभक्तम् ॥२९॥

पञ्चशतधातुयुक्तं पञ्चगुणं पञ्चविधमिदं वापि ।
स्वाद्यधिकारगुणैरर्थविशेषैर्विभूषितन्यासम् ।
प्रातिपदिकार्थलिङ्गैर्युक्तं पञ्चविधमिदं ज्ञेयम् ॥३०॥

आख्यातं पाठ्यकृतं ज्ञेयं नानार्थप्रत्ययविशेषम्] ।
वचनं नामसमेतं पुरुषविभक्तं तदाख्यातम् ॥३१॥

प्रातिपदिकार्थयुक्तान्धात्वर्थानुपसृजन्ति ये स्वार्थे ।
उपसर्गा ह्युपदिष्टास्तस्मात् संस्कारशास्त्रेऽस्मिन् ॥३२॥

प्रातिपदिकार्थयोगाद्धातुश्छन्दोनिरुक्तयुक्त्या च ।
यस्मान्निपतन्ति पदे तस्मात्प्रोक्ता निपातास्तु ॥३३॥

---

पुरुषैरुत्तममध्यमप्रथमैर्विभक्तम् ॥२९॥

धात्वर्थानुपसृजन्ति उपरागेण सम्बन्धात् कुर्वन्ति तेनोपकारेण प्रातिपदिका-र्थस्य युक्तसम्बन्धेन प्रकरोतीति । हि शब्द प्रकर्षे । प्रातिपदिकार्थोपरागेण वा धात्वर्थं विचित्र करोति । यदा तु स्वार्थ. धात्वर्थानुपसृजन्ति अत उपसर्जनात् प्रातिपदिकार्थं च युक्ता उपसर्गा यथा प्राचार्य प्रान्तेवासी ।३०। प्रातिपदिकार्थयोगात् वृद्धश्च वद्धश्च, धातुयुक्त्या पचति पठति च पाठ ( पाठ ) योरेव हि समुच्चयार्थश्चशब्दो युक्तो । अनुक्तसमुच्चयार्थस्तु पादपूरणार्थमुच्यते । यत्र द्योतनेन विना न मण्यना, द्योतने च सति वाक्यमनष्टत्व भवति । तद्यथा—"मिलति न खलु यस्या" इति खलुशब्द-प्रयामस्याहनार्थत्व द्योतयति । तच्च येनापि विना स्फुटमेव वाक्यार्थस्य एव लाभात् । "अहरहरनुरागात्" इति निर्भज्य वचन द्योतितस्यापि स्फुटीकरणम्, तद्युक्त्या : "अहो बतासि स्पृहणीयवीर्यं" इत्यत्र प्रातिपदिकार्थेनैतैरर्थैरुपनिपतन्ति संज्ञीभवन्ति ।३१। तद्धित—नस्य प्रातिपदिकार्थाय हितम्स । प्रातिपदिकार्थं यदन वा स्वार्थोऽनुक्ते । प्रकृतिप्रत्ययोर्विभागोऽत्रत्व । वाच्ये तस्मात स( प्र ? )योग-प्रयोजनमेन्द्रेऽभिहित, सयोग. गवन्य । चान्द्री ज्योत्स्ना । सन्त तद्भाव. यथा मृतस्य स्वभाव. मौनस्य वचन प्रवचन कारकादित्ययुक्त्या, तुर्यत्वसमाप्यायविहिता निर्दिश्यन्ते ॥३३॥

एकस्य पदस्य बहूना वा पादानां समाप्ति प्राप्तानाम् । वाशब्दाद् द्वयोरपि । येनार्थो विभज्यते विभक्त्याख्य प्रत्यय, तेषां च पदाना द्वैविध्य धातोर्वा सविधि

प्रत्ययविभागजनिता प्रत्ययसंयोगसत्त्ववचनैश्च ।
यस्मात्पूरयतेऽर्थान् प्रत्यय उक्तस्ततस्तस्मात् ॥३४॥

सोऽर्थं प्रकृतिप्रत्ययविभागसंयोगसत्त्ववचनैश्च ।
तांस्तान् पूरयतेऽर्थांस्तेषु यतस्तद्धितस्तस्मात् ॥३५॥

एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानां वा ।
विभजन्त्यर्थं यस्मात् विभक्तयस्तेन ता प्रोक्ता ॥३६॥

विश्लिष्टास्तु स्वरा यत्र व्यञ्जनं वापि योगत ।
सन्धीयते पदे यस्मात्तस्मात्सन्धि प्रकीर्तित ॥३७॥

[वर्णपदक्रमसिद्ध पदैक्ययोगाच्च वर्णयोगाच्च ।
सन्धीयते च यस्मात्तस्मात् सन्धि समुद्दिष्ट ॥३८॥

लुप्तविभक्तिर्नाम्नामेकार्थं संहरत्समासोऽपि ।
तत्पुरुषादिकमसौ निर्दिष्ट षड्विधो विप्रा ।] ॥३९॥

एभि शब्दविधानैर्विस्तारव्यञ्जनार्थसंयुक्तै ।
पदबन्धा कर्तव्या निबद्धबन्धास्तु चूर्णा वा ॥४०॥

द्विप्रकारं पद ज्ञेय निबद्ध चूर्णमेव च ।
तत्र चूर्णपदस्येह सन्निबोधत लक्षणम् ॥४१॥

अनिबद्धपद छन्दोविधानानियताक्षरम् ।
अर्थापेक्ष्यक्षरयुत ज्ञेय चूर्णपद बुधै ॥४२॥

निबद्धाक्षरसंयुक्त यतिच्छेदसमन्वितम् ।
निबद्ध तु पद ज्ञेय प्रमाणनियताक्षरम् ॥४३॥

---

बहुत्वम्, लिङ्गस्य वा सम्बन्धि अर्थं यल्लिङ्गमिति मतान्तरे अनुवादम्। यदि वा लिङ्गस्य सम्बन्धिनो विभक्तेः प्रतिपादिकात् सुप् धातोस्तिङ् ।३६। पदं स्वरवर्णैः निष्पन्नं संहितयाह ।३७। निबद्धो आविष्टोऽसंधिना पद समुद्भावः । पदबन्धा इत्युक्तम् ।३८। पद निबन्धनमिति सर्वेषि परिमितगणमध्यादि यथायथ ।३९। ४० दो- नियताक्षरम् । अक्षरसंख्यानियम अक्षरनियमो गुरुलघुनियमोऽनियम (गन्धर्वानियम एकाक्षर पादो द्व्यक्षर. पाद इत्यादि ।) एतद्विहीन चूर्णपदम । अथ सहस्राक्षरादि स्तस्वेच्छाक्षराणि परिमितानि भूतानि वा न्यूनानि यत्रेति अन्यत्रागमपट्टनादयमनुष- मिति । इद तु केवल पदाक्षरमत्वाद् पदमित्युच्यते । ४२। अनिविराम । (छेदस्याग पदविभाग ) पादमध्यवा सामान्यलक्षणमाह प्रमाणेन चोर्ध्वं छिद्यते निदा आत्मा यत्र धर्ममितर्थ. ॥४३॥

एव नानार्थसंयुक्तै पादैर्वर्णविभूषितै ।
चतुर्भिस्तु भवेद्युक्त छन्दोवृत्ताभिधानवत् ॥४४॥

षड्विंशति स्मृतान्येभि. पादैश्छन्दांसि संख्यया ।
समञ्चार्धसमञ्चैव तथा विषममेव च ॥४५॥

छन्दोयुक्त समासेन त्रिविध वृत्तमिष्यते ।
नानावृत्तिविनिष्पन्ना शब्दस्यैषा तनुस्स्मृता ॥४६॥

छन्दोहीनो न शब्दोऽस्ति न च्छन्दश्शब्दवर्जितम् ।
तस्मात्तूभयसंयोगो नाट्यस्योद्योतक स्मृत ॥४७॥

एकाक्षर भवेदुक्तमत्युक्त द्व्यक्षर भवेत् ।
मध्य[1] त्र्यक्षरमित्याहु, प्रतिष्ठा चतुरक्षरा ॥४८॥

सुप्रतिष्ठा भवेत् पञ्च, गायत्री षड् भवेदिह ।
सप्ताक्षरा भवेदुष्णिगष्टाक्षरानुष्टुबुच्यते ॥४९॥

नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
एकादशाक्षरा त्रिष्टुब् जगती द्वादशाक्षरा ॥५०॥

त्रयोदशातिजगती शक्वरी तु चतुर्दशा ।
अतिशक्वरी पञ्चदशा षोडशाष्टि प्रकीर्तिता ॥५१॥

अत्यष्टि स्यात्सप्तदशा धृतिरष्टादशाक्षरा ।
एकोनविंशतिर्धृति कृतिर्विंशतिरेव च ॥५२॥

प्रकृतिश्चैकविंशत्या द्वाविंशत्याकृतिस्तथा ।
विकृति स्यात् त्रयोविंशा चतुर्विंशा च संकृति ॥५३॥

पञ्चविंशत्यभिकृति षड्विंशान्युत्कृतिर्भवेत् ।
अतोऽधिकाक्षर छन्दो मालावृत्त तदिष्यते ॥५४॥

---

अथ छन्दोलक्षण कर्तु तस्य स्वरूप तावदाह एवमित्यादि । वर्णा गुरुत्व-लघुत्वाद्यवच्छिन्ना । विविधैर्गुणै. सालकारै पादैश्चतुर्भिरिति सबन्ध इद तत्तत् पादेषु भवन्ति, यद्यपि निगदनीयत्वेऽपि विशेषमनया व्यपदेश. ।४४। षड्विंश-तिरिति तावत्परिमाणान्येकाक्षरादारभ्य षड्विंशत्यक्षराणि यावदुक्तादीन्युत्कृत्यन्तानि छन्दांसीत्यर्थ । पादचतुष्टये तुल्यलक्षण सम, अतुल्यलक्षण विषमम् अर्धसम प्रथमतृतीययोर्द्वितीयचतुर्थयो. । सत्ताभिदच्छन्दोभेदा आश्रिता ।४५।

---

१. GOS, एव ।

छन्दसां तु तथा ह्येते भेदा प्रस्तारयोगत ।
असङ्ख्येयप्रमाणानि वृत्तान्याहुस्ततो बुधा ॥५५॥

गायत्रीप्रभृतिस्त्वेषां प्रमाणं सन्निबोधत ।
प्रयोगजानि सर्वाणि प्रायशो न भवन्ति हि ॥५६॥

वृत्तानि च चतुष्षष्टिर्गायत्र्यां कीर्तितानि तु । (६४)
शतं विंशतिरष्टौ च वृत्तान्युष्णिह्युच्यते ॥५७॥ (१२८)

षट्पञ्चाशच्छते द्वे च वृत्तानामप्यनुष्टुभि । (२५६)
शतानि पञ्च वृत्तानां बृहत्यां द्वादशैव च ॥५८॥ (५१२)
पङ्क्त्यां सहस्रं वृत्तानां चतुर्विंशतिरेव च । (१०२४)
त्रिष्टुभे द्वे सहस्रे च चत्वारिंशत्तथाष्ट च ॥५९॥ (२०४८)

सहस्राण्यपि चत्वारि नवतिश्च षडुत्तरा ।
जगत्याः समवृत्तानां वृत्तानामिह सर्वश ॥६०॥ (४०९६)

अष्टौ सहस्राणि शतं द्व्यधिका नवति पुन ।
जगत्यामतिपूर्वायां वृत्तानां परिमाणत ॥६१॥ (८१९२)

शतानि त्रीण्यशीतिश्च सहस्राण्यपि षोडश ।
वृत्तानि चैव चत्वारि शक्वर्यां परिसङ्ख्यया ॥६२॥ (१६३८४)

द्वात्रिंशच्च सहस्राणि तथा चैव शतानि च ।
अष्टौ षष्टिश्च वृत्तानि ह्यथाप्यतिशक्वरीम् ॥६३॥ (३२७६८)

पञ्चषष्टिसहस्राणि सहस्रार्धं च सङ्ख्यया ।
[1]षट्त्रिंशच्चैव वृत्तानि ह्यष्ट्यां निगदितानि च ॥६४॥ (६५५३६)

एकत्रिंशत्सहस्राणि वृत्तानां च द्विसप्तति ।
तथा शतसहस्रं च छन्दस्यत्यष्टिसंज्ञिते ॥६५॥ (१३१०७२)

धृत्यामपि हि विज्ञेयं वृत्तान्याकल्पितानि तु ।
तस्यां शतसहस्रे द्वे शतमेकं तथैव च ॥६६॥

---

तथा ह्येते भेदा इत्याह प्रस्तारयोगत इति प्रस्तारे योगो युक्ति तत्र तत्र युक्तिवचने—

"प्रथमे सर्वे गुरु, तत्र पूर्वगुरोरधो ल परिपूर्णं वदन् ।
स्यात्पूर्वं पूर्वं गुरुणेति यावत्सर्वं ल ग्रहरणे तदेव ॥

---

१ षट्त्रिंशदेव वृत्तानि तथाष्ट्यां गदितानि तु ।

द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः ।
चत्वारि चैव वृत्तानि समसंख्याश्रयाणि तु ॥६७॥ (२६२१४४)
अतिधृत्यां सहस्राणि चतुर्विंशतिरेव च ।
तथा शतसहस्राणि पञ्च वृत्तशतद्वयम् ॥६८॥
अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि च । (५२४२८८)
कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया ॥६९॥
चत्वारिंशत्तथा चाष्टौ सहस्राणि शतानि च ।
पञ्चषट्सप्ततिश्चैव वृत्तानां परिमाणतः ॥७०॥ (१०४८५७६)
तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् ।
सप्त वै नवतिस्त्वत्र भवतिश्चैव संख्यया ॥७१॥
सहस्राणि शतं चैकं द्विपञ्चाशत्तथैव च ।
वृत्तानि परिमाणेन वृत्तज्ञैर्गदितानि तु ॥७२॥ (२०९७१५२)
चत्वारिंशत्तथैकञ्च लक्षाणामथ संख्यया ।
तथा चेह सहस्राणि नवतिश्चतुरुत्तरा ॥७३॥
शतत्रयं समाख्यातं ह्याकृत्यां चतुरुत्तरम् । (४१९४३०४)
शेषा शतसहस्राणामशीतिस्त्र्यधिका बुधैः ॥७४॥
अष्टाशीति सहस्राणि वृत्तानां षट्शतानि च ।
अष्टौ चैव तु वृत्तानि विकृत्यां कथितानि तु ॥७५॥ (८३८८६०८)
तथा शतसहस्राणि सप्तषष्टिश्च सप्ततिः ।
सप्त चैव सहस्राणि षोडश द्वे शते तथा ॥७६॥
कोटिश्चैवेह वृत्तानि संकृतौ कथितानि वै । (१६७७७२१६)
कोटित्रयञ्चाभिकृत्यां पञ्चत्रिंशद्भिरन्वितम् ॥७७॥
पञ्चाशद्भिः सहस्रैश्च चतुर्भिरधिकैस्तथा ।
चतुष्टयं शतानाञ्च द्वात्रिंशद्भिः समन्वितम् ॥७८॥ (३३५५४४३२)
षट् कोटयस्तथोत्कृत्यां लक्षाणामेकसप्ततिः ।
चतुष्षष्टिशतान्यष्टौ सहस्राण्यष्ट चैव हि ॥७९॥ (६७१०८८६४)

---

एते यथा भेदाः । षडक्षराणि गायत्र्या तत एतानारभ्य प्रयोगार्हाणीति सूचयति उक्त्यादीनामप्रयोज्यत्वात् । तदाह प्रयोगज्ञानीति लक्ष्यन्ते न स्थितानि, अपि तु वेदवद् दृश्यन्त इति भावः । वृत्तानि च चतुष्षष्टिरित्यादिना स्वकण्ठेन संख्या पठति यावत् ।

षट्कोट्यस्तु सहस्राणां शतानि ह्येकसप्तति ।
अष्टौ चैव सहस्राणि शतान्यष्टौ तथैव च ॥

उक्थाद्युत्कृतिपर्यन्तवृत्तसंख्या विचक्षणः ।
एतेन च विकल्पेन वृत्तेष्वेतेषु निर्दिशेत् ॥८०॥

सर्वेषां छन्दसामेव वृत्तानि कथितानि वै ।
तिस्रः कोट्यो दश तथा सहस्राणां शतानि तु ॥८१॥

चत्वारिंशत्तथा द्वे च सहस्राणि दशैव तु ।
सप्तभिः सहितान्येव सप्त चैव शतानि च ॥८२॥

षड्विंशतिरिहान्यानि, व्याख्यातानि समासतः । (१३४२१७७२६)
समानि गणनायुक्तिमाश्रित्य कथितानि वै ॥८३॥

सर्वेषां छन्दसामेव त्रिकैर्वृत्तं प्रयोजयेत् ।
संख्याताष्टौ त्रिकास्तत्र सर्वाणि स्युर्नवाक्षरम् ॥८४॥

त्रीण्यक्षराणि विज्ञेयस्त्रिकोऽसौ परिकल्पितः ।
गुरुलघ्वक्षरकृत सर्ववृत्तेषु नित्यशः ॥८५॥

गुरुपूर्वो भकारः स्यान्मकारे तु गुरुत्रयम् ।
जकारो गुरुमध्यस्थ सकारोऽन्त्यगुरुस्तथा ॥८६॥

लघुमध्यस्थितो रेफस्तकारोऽन्त्यलघुः परः ।
लघुपूर्वो यकारस्तु नकारे तु लघुत्रयम् ॥८७॥

एते ह्यष्टौ त्रिका प्राज्ञैर्विज्ञेया ब्रह्मसम्भवा ।
सार्थयार्थं पुनरमी छन्दोज्ञानमवेक्ष्य च ॥८८॥

एभिर्विनिर्गतास्त्वन्या जातयोऽथ समासतः ।
अक्षराः स्वराद्यैश्चैव प्रोच्यन्ते वृत्तलक्षणे ॥८९॥

गुर्वेक गिति विज्ञेय तथा लघु लिति स्मृतम् ।
नियत पदविच्छेदो यतिरित्यभिधीयते ॥९०॥

गुरु दीर्घं प्लुतश्चैव सयोगपरमेव च ।
सानुस्वारविसर्गं च तथा ह्रस्वं लघु क्वचित् ॥९१॥

---

चतुःषष्टिस्तु वृत्तानि ह्युत्कृत्यार्थेति गम्यता ॥ इति प्रमाणम् । उक्थाद्युत्कृत्यन्ता-
नस्यां प्रमाणोद्दरणाह तिस्रः कोट्य इत्यादिना ।८१—८२।

तदनु पूर्वेण पिण्डयित्वा सर्वसङ्ख्याजातं कलयतात् ।
एकादिकसङ्ख्याद्विगुण (विपिण्ड्या ?) (च गुणिन्द्य)
सङ्ख्याप्रमाणकनिधानमथ पिण्डयान ।
एकं द्विरित्युत्तरोति सङ्ख्यानुग-
सङ्ख्याङ्कावसितो मधुरध्युगन ॥

[1]गायत्र्यां द्वौ त्रिकौ ज्ञेयौ, उष्णिक् चैकाधिकाक्षरा ।
अनुष्टुप् द्व्यधिका चैव बृहत्या च त्रिकास्त्रय ॥६२॥

एकाक्षराधिका पङ्क्तिस्त्रिष्टुप् च द्व्यधिकाक्षरा ।
चतुस्त्रिका तु जगती सैकातिजगती पुनः ॥६३॥

शक्वरी द्व्यधिका पञ्च त्रिका ज्ञेयातिशक्वरी ।
एकाधिकाक्षराष्टिश्च द्व्यधिकात्यष्टिरुच्यते ॥६४॥

षट्त्रिकास्तु धृतिः प्रोक्ता सैका चातिधृतिस्तथा ।
कृतिश्च द्व्यधिका प्रोक्ता प्रकृत्या सप्त वै त्रिका. ॥६५॥

आकृतिस्त्वधिकैकेन द्व्यधिका विकृतिस्तथा ।
अष्टत्रिका सङ्कृती स्यात् सैका चाभिकृतिः पुनः ॥६६॥

उत्कृतिर्द्व्यधिका चैव विज्ञेया गणमानतः ।
[गुर्वेक ग इति प्रोक्त गुरुणी गाविति स्मृतौ ।
लघ्वेक ल इति ज्ञेय लघुनी लाविति स्मृतौ ॥६७॥

---

यथा (ध्य ?) (मप्ना) क्षरे तत्पिण्डयित्वा एकाक्षरक्षेपात् (धृति.) एकस्याकाक्षरात्याक्षरक्षेप पर्यवसानाक्षर यावत् "द्वयश उक्तक्रमेणेह द्वैगुण्यं यावदुच्यते" । इति ॥६२॥

एकाक्षरे द्वौ, द्व्यक्षरे चत्वार, त्र्यक्षरेऽष्टौ, चतुरक्षरे षोडशेत्यादिसंक्षेप । अनेनैवोपायेन विचार्य ग्रन्थे पाठो निश्चेय ।६२। सर्वेषां छन्दसां वृत्तानामित्याशयं. समासेन जयदेवोऽभ्यधात्—"सर्वादिमध्यान्तगलौ त्रिकौ म्नौ भ्यौ ज्सौ स्तौ" इति (अ. १-२) निर्दिष्टलक्षितेऽपि वृत्ते त्रिकमध्यानेन यत्र छन्दो न पूर्यते यथोष्णिक्, अत्रैकमधिकमक्षरमधिकत्वेनोक्त अनुष्टुभि द्वे । अत्र त्रिकबीजानि गुरुलघुरूपाण्येव वर्तिष्यन्ति ॥६३॥

अत्रैकमधिकमिति । तथा चैक गुरु लघु वा द्वे गुरुणी द्वे लघुनी द्वे लघुगुरुणी गुरुलघुनी वा तदाह द्विकौ ग्लावित्यादि वक्ष्यमाणश्लोकेन व्याचष्टे नैवातिरिक्तमिति । सम्पदिति स्वराट् विराट् भूरिक् निचृत् इत्येषां श्रुतावेव सम्भवो न काव्य इति तात्पर्यम् । एतन्निरूपण तु उपयुज्यते यत्र वेदवाक्यसदृश वाक्य निर्णीयते, यथा अभिज्ञानशाकुन्तले ॥६४॥

---

१. GOS read here before this verse. गायत्री प्रभृति त्वेषा प्रमाण सम्प्रवर्तते । प्रयोगजानि पूर्वाणि प्रायशो न भवन्ति हि ॥

छन्दतो यस्य पादे स्यादूनं वाऽधिकमेव वा[1] ।
अक्षरं निचृदिति प्रोक्तं भुरिक् चेति द्विजोत्तमाः ॥१०६॥

अक्षराभ्यां सदा द्वाभ्यामधिकं हीनमेव वा ।
तच्छन्दो नामतो ज्ञेयं स्वराडिति विराडपि ॥१०७॥

सर्वेषामेव वृत्तानां सञ्ज्ञेया गणास्त्रयः ।
दिव्यो दिव्येतरश्चैव दिव्यमानुष एव च ॥१०८॥

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गणः ॥१०९॥

तथातिजगती चैव शक्वरी चातिशक्वरी ।
अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणः ॥११०॥

कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा ।
सङ्कृत्यभिकृती चैव उत्कृतिर्दिव्यमानुषा ॥१११॥

---

अधिष्ठात्री देवता बहुधाद्य । वागीशाद्येत्यादि । तथोक्तं कात्यायनेन—

वीरस्य भुजदण्डानां वर्णने स्रग्धरा भवेत् ।
नायिकावर्णने कार्यं वसन्ततिलकादिकम् ॥
शार्दूललीला प्राच्येषु मन्दाक्रान्ता च दक्षिणे । इत्यादि ।

पुनरप्यत्र प्रयोगो भवत्येव । यथा—"यतोऽश्मसमानेन स एव मूढो द्रोणागिरे यानि पदे विजग्न" स तु पाठो दीर्घवत्पठितव्य प्रयोक्तव्य विभाग एव ।

दैवेनादय इति छन्दसि प्रतिशाम्याद्यो विविधो वर्णं इति तदनुप्रयोगाद्यास्माभिर्लिखितम् । भगवते इत इति श्लोके नेपाविद्योधकतोटकादीनां गीयमानतया शोभातिशयो भवति । स्रग्धरादीनां तु पाठेन । च शब्देन प्रगाथेन ध्यावष्टे दिव्य इति । प्रथम इति स्तोत्रशास्त्रेषु गम्भीराणामिव छन्दसां बाहुल्येन दर्शनात् । देवस्तुत्यादौ देवेषु वक्तृत्वेन गण इत्यर्थः । गण इति द्वितीयो दिव्यानिवृत्तो गण इत्यर्थः तेन मानुषेषु वक्तृत्वेन प्रायेण । तृतीयस्तु दिव्यमानुषेषु च रामादिषु नरपतिषु च ।

प्रस्तारस्तत्र सङ्ख्यादि सर्वमिति सङ्ख्याशब्देनाह, तद्गुणमविज्ञानाच्च प्रस्तारोऽप्युच्यते । प्रस्तरणं वितानन लक्षणमद्भुमंस्येत्यर्थः । नष्टमिति स्वरूपेणैव न ज्ञातं सङ्ख्यया तु ज्ञातम्, उद्दिष्टं तु स्वरूपेण ज्ञातं न सङ्ख्यया । तज्ज्ञानोपायेन नष्टादयः सिद्धाः ।

---

१. GOS वृत्तस्थसमं चैव विषममेव च ।

[1]एकादिकां तथा सख्यां छन्दसो विनिवेश्य तु ।
[2]यावत् पूर्णन्तु पूर्वेण पूरयेदुत्तर गणम्[3] ॥१२४॥
समानां विषमाणां च सगुणस्य तथा स्फुटम् ।
राश्यूनामभिजानीयाद्विषमाणां समासत ॥१२५॥
एव कृत्वा तु सर्वेषां परेषां पूर्वपूरणम् ।
[[4]क्रमान्नंयनमेकैक प्रतिलोम विसर्जयेत् ॥१२६॥
सर्वेषां छन्दसामेव लघ्वक्षरविनिश्चयम् ।]
जानीत समवृत्तानां सख्यां सक्षेपतस्तथा ॥१२७॥
[5]वृत्तस्य परिमाणन्तु छित्वाऽर्धेन यथाक्रमम्[6] ।
न्यसेल्लघु तथा संक्रमलर गुरु द्विचाप्यथ ॥१२८॥
एव विन्यस्य वृत्तानां नष्टोद्दिष्टविभागत ।
गुरुलघ्वक्षराणीह सर्वछन्दस्सु दर्शयेत् ॥१२९॥
[इति छन्दांसि यानीह मयोक्तानि द्विजोत्तमा[1] ।
वृत्तान्येतेषु नाट्येऽस्मिन् प्रयोज्यानि निबोधत ] ॥१३०॥

---

तामपि सख्यां गुणविशा गुणराशि पातयेत् । तेन च गहनराशीति सप्तान्यशीनिर्वेदि चतुरक्षरे विषमवृत्तानि ॥१२४॥

अथ नष्टमाह वृत्तस्य परिमाण स्थिति सख्यामर्धेन छिन्द्यात् । यत्र विषमाङ्क न पूर्यते तत्र पूरणार्थमेकमधिक कुर्यात् । तदाह यथाक्रममिति । तत्र गुरु । सैककरणा-त्समस्तगौरवात् लघुरन्यथा अर्धेच्छेदात् । एव पुन पुनर्यावदक्षराणि पूर्णानि तावत् । चतुरक्षरे पञ्चमो भेद कीदृगिति—पूर्व पञ्चानाद्दूम्य सैकच्छेदात् गुरु, पुनरपि त्र्याङ्कस्य सैकच्छेदात् गुरु, द्वयोरन समच्छेदान्लघु एकस्य सैकच्छेदाद् गुरु, एतेनेदृश पञ्चमो भेद ॥१२९॥

एतदुपसहरन्नध्यायान्तरमासूत्रयति एवमिति । अर्थाङ्केन विभागेन लघु-प्रधानानि वा गुरुप्रधानानि वा सर्वे निवेशयेत् वक्ष्यमाणमीदृशमिति नियम् ॥१३०॥

---

१. NS एकाधिकां । KSS. एकायां च ।
२. NS. यावच्चरणं ।
३. KSS. उत्तरस्तथा ।
४. NS does not read
५. NS., वृत्तार्धपरिमाण KSS. वृत्तान्त्यपरिमाण ।
६. KSS, गुरु न्यसेत् ।

[1]इति भरतीये नाट्यशास्त्रे वाचिकाभिनये छन्दोविधान नाम

चतुर्दशोऽध्याय ।

---

पार्वतीवदनाम्भोजभृङ्गनेत्रत्रयीभुव ।
दासोऽभिनवगुप्ताख्यश्छन्दोऽध्यायमपप्रथत् ।

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायामभिनवभारत्या नाट्यवेविवृतौ छन्दोऽध्यायश्चतुर्दश समाप्तिमगमत् ॥

□□□

१. इति भारतीये नाट्यशास्त्रे वाचिकाभिनयश्छन्दोविभागो नाम पञ्चोदशोऽध्याय. ।

एकमात्र षट्के स्याद् द्वितीय पादे ।
ख्यातरूपा वृत्ते मालिनी सा नाम्ना ॥६॥

षडक्षरकृते पादे लघु यत्र द्वितीयकम् ।
शेषाणि तु गुरूणि स्युर्मालिनी सा मता यथा ॥७॥

[1]स्नानगन्धाधिकर्मैर्वस्त्रभूषाप्रयोगैः ।
व्यक्तमेवासौ स्व मालिनी प्रख्याता ॥८॥

द्वितीयं पञ्चमं चैव लघु यत्र प्रतिष्ठितम् ।
शेषाणि च गुरूणि स्युर्मालती नाम सा यथा ॥९॥

शोभते बद्धया षट्पदाविद्धया ।
मालतीमालया मानिनी लीलया ॥१०॥

द्वितीयं च चतुर्थं च पञ्चमं च यदा लघु ।
षष्ठ्या सप्ताक्षरे पादे ज्ञेया सा तूद्धता यथा ॥११॥

[2][सौ त्रिगौ यदि पादे ह्यन्तिमस्य गकारः ।
उष्णिगुत्थितपादा उद्धता खलु नाम्ना] ॥१२॥

[3]दन्तकुन्तक्षताढ्यं व्याकुलालकशोभम् ।
शंसतीव तवास्यं निर्दयं रतयुद्धम्[4] ॥१३॥

आदौ तु निधने चैव गुरुणी यत्र वै सदा ।
पादे सप्ताक्षरे ज्ञेया नाम्ना भ्रमरमालिका ॥१४॥

[5][पादे यदि निविष्टौ सम्यग्विरचितौ रसौ ।
मध्ये यदि गकारः सा तु भ्रमरमाला] ॥१५॥

यथा—नानाकुसुमविचित्रे प्राप्ते सुरभिमासे ।
एषा भ्रमति मत्ता कान्ते भ्रमरमाला ॥१६॥

आद्यं तृतीयमन्त्यं च पञ्चमं सप्तमं तथा ।
गुरूण्यष्टाक्षरे पादे सिंहलेखेति सा यथा ॥१७॥

---

एतन्नाम्ना प्रसिद्धा ख्यातरूपा श्लाघनीयेत्यर्थः ॥६॥

---

१. NS. स्नानगन्धस्रग्भि ।
२. KSS., NS. do not read.
३. NS., KSS दन्तक्षतविधनाढ्य ।
४. KSS., NS युद्धमुद्धतवेषम् ।
५. KSS., NS. do not read.

[जातु यस्य गौ न, पादे सस्थिन समस्तरूपे ।
तामनुष्टुभाश्रयस्थां वावदन्ति सिंहलेखाम्] ॥१८॥

यत्त्वया ह्यनेकभावचेष्टित रहः सुगात्रि ।
तन्मनो मम प्रविष्ट वृत्तमत्र सिंहलेखम् ॥१९॥

चतुर्थं च द्वितीयं च षष्ठमष्टममेव च ।
गुरूण्यष्टाक्षरे पादे यत्र तन्मत्तचेष्टितम् ॥२०॥

[यत्र तु जात्यरौ रलौ गकार एव च स्थितः ।
अनुष्टुबुद्भव तदा वदन्ति मत्तचेष्टितम्] ॥२१॥

यथा—[1]चराघूर्णितेक्षणं विलम्बिताकुलालकम् ।
प्रमस्थितं पदं प्रिया करोति मत्तचेष्टितम् ॥२२॥

अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि ।
गुरूणि यस्मिन्सा नाम्ना [2]विद्युन्मालेति कीर्तिता ॥२३॥

[मो मो यान्त्यौ यस्याः पादे पादस्यान्ते विच्छेदश्च ।
सा चानुष्टुप्पृष्ठस्थयुक्ता नित्यं सद्भिर्विद्युन्माला] ॥२४॥

[3]सम्भोनादैरंतानदिभ श्यामाम्भोदैर्व्याप्ते व्योम्नि ।
आदित्यांशुस्पर्धिन्येषा दिक्षु भ्रान्ता विद्युन्माला ॥२५॥

[4][पञ्चमं सप्तमं चान्त्यं गुरु पादेऽष्टकं तथा ।
छन्दोजैर्यमेतत्तु वृत्तं चित्तविलासितम् ॥२६॥

स्मितवशविप्रकाशैर्दशनपदैरमीभि ।
वरतनु पूर्णचन्द्र तव मुखमावृणोति] ॥२७॥

नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि च ।
गुरूणि यस्या सा नाम्ना ज्ञेया मधुकरी यथा ॥२८॥

[यदिह यदि लघूनि स्युर्निधनगतमकारश्चेत् ।
कुपवनवृहतीसंस्था भवति मधुकरी नाम्ना] ॥२९॥

---

त्वया यन्मदीय मन प्रविष्ट श्यामलाकान्त नलिनहृदयविरेतनस्तत्र यातम् ।
तादृ वृत्त तथ्यावास्तम् ॥१९॥

---

1. NS. मदाघूर्णित । KSS. varies.
2. विद्युन्मेतिनामान्तरम् ।
3. KSS. सम्भोदैर्नीलाम्भोदैः NS. सम्भोधारैरानन्दैः ।
4. KSS., NS. do not read.

कुसुमितमभिपश्यन्ती[1] विविधतरुगणैश्छन्नम् ।
वनमतिशयगन्धाढ्य भ्रमति मधुकरी हृष्टा ॥३०॥

[2]दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने ।
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिका ॥३१॥

[त्रीण्यादौ यदि हि गुरूणि स्युश्चत्वारो यदि लघवो मध्ये ।
षड्चनावन्तगतमकार स्याद्विज्ञेया कुवलयमालाख्या] ॥३२॥

यथा—[3]अभिमस्ते शिरसि तव कान्ते वैडूर्यस्फटिकसुवर्णाढ्ये ।
शोभा त्वा न वहति ता बद्धा सुश्लिष्टा कुवलयमालेयम् ॥३३॥

द्वितीय च चतुर्थं च षष्ठमष्टममेव च ।
ह्रस्व दशाक्षरे पादे यत्र सा शिखिसारिणी ॥३४॥

[जौ शिरो हि पादगौ तु यस्या गौ च संश्रितौ तथा समौ स्तौ ।
षड्क्नयोम सुप्रतिष्ठिताङ्गी सा मयूरसारिणीति नाम्ना] ॥३५॥

यथा—नैव तेऽस्ति सङ्गमो मनुष्यैर्नापि कामभोगचिह्नमन्यत् ।
गर्भिणीव दृश्यसे ह्यनार्ये ! किं मयूरसारिणी त्वमेवम् ॥३६॥

[4]आद्य चतुर्थमन्त्य च सप्तम दशम तथा ।
गुरूणि त्रैष्टुभे पादे यत्र स्युर्दीपक तु तत् ॥३७॥

[भौ तु मगाविति यस्य गणा स्यु स्याच्च यतिस्त्रिचतुर्भिरथास्मिन् ।
त्रैष्टुभमेव हि तत्तु नाम्ना दीपकवृत्तमिति प्रवदन्ति] ॥३८॥

यथा—प्रस्खलिताग्रपदप्रविचार मत्तविघूर्णितगात्रविलासम्[5] ।
पश्य विलासिनि ! कुञ्जरमेत, दीपकवृत्तमय[6] प्रकरोति ॥३९॥

---

त्वा मा त्वाम् (त्वमाश्रयतेने ये भेदा ?) वैडूर्यच्छायानि यानि दलानि तत्स्फुरत्सुवर्णतुल्यानि वर्णानि तदभ्यन्तरकेसराणि ॥३३॥ मयूरवद् ध्यानोचमस्या मयूरीभिर्वा (मारी) गतिविक्षेपो भवतीत्याह ॥३६॥
मन्द मन्द दीपवेन गीयमान वृत्त दीपकवृत्तम् ॥३९॥

---

१. KSS अपश्यन्ती ।
२. KSS. varies.
३. KSS, NS. varies absolu tely.
४. KSS , NS प्रथम च चतुर्थं च ।
५. KSS. विलासम् ।
६. KSS., NS. गतिम् ।

आदौ द्वौ पञ्चमं चैवाप्यष्टमं नवमं तथा ।
गुरूण्येकादशे पादे यत्र तत्त्रोटकं यथा ॥४०॥

एषोऽम्बुदनिस्वनतुल्यरवः [1]क्षीबः स्खलमानविलम्बगतिः ।
श्रुत्वा घनगर्जितमद्रितटे वृक्षान् प्रतिमोटयति द्विरदः ॥४१॥

नवमं सप्तमं षष्ठं तृतीयं च भवेल्लघु[2] ।
[3]एकादशाक्षरे पादे इन्द्रवज्रेति सा यथा ॥४२॥

[4]त्वं दुर्निरीक्ष्या दुरतिक्रमाता [5]दुर्ग्राह्यभाव्या कठिनस्वभावा ।
सर्वातिशय्यासु च कामतन्त्रे योग्यासि किं ? वा बहुलेन्द्रवज्रा[6] ॥४३॥

एभिरेव तु संयुक्ता लघुभिस्त्वंघ्रिभो यदा ।
उपेन्द्रवज्रा विज्ञेया [7]मध्याद्यायिह संज्ञनम् ॥४४॥

[8]प्रिये ! श्रिया वर्णविशेषणेन स्मितेन कान्त्या सुकुमारभावं ।
अमी गुणा [9]रूपगुणानुरूपा [10]भवन्ति ते किं ? त्वमुपेन्द्रवज्रा[11] ॥४५॥

आद्यं तृतीयमन्त्यं च सप्तमं नवमं तथा ।
गुरूण्येकादशे पादे यत्र सा तु रथोद्धता ॥४६॥

---

एष इति चाम्बुदनादतुल्य गर्जितं श्रुत्वा ॥४१॥

उपेन्द्रवज्रा अन्या उपमानत्वेन सा यथा । सत्यमपि उपेन्द्रवज्रायास्तु रूपगुण उत्तमितत्वग्रयममिरूपगुणिसमभाव । द्विगुणात्मे पतन्तिल्निर्देशः । स्मितेन कान्त्या च । रूपगुणयोरपि वर्णविविध भवति ॥४५॥

---

१ KSS. क्षतम्भ्रमनमान ।
२ KSS, NS लघून्यथ ।
३. KSS., NS. यदेकादशके ।
४. KSS, NS त्वं नु निरीक्ष्यासुनिरस्तमाया ।
५. NS. दुर्गेन माम्या कठिनो सतो ते ।
६. KSS. वज्रो ।
७ NS मध्याद्यन्तेविह ।
८. KSS. श्रिया च वर्णेन । NS प्रेम्णा श्रिया वर्णविशेषणेन ।
९. KSS. रूपरूपा ।
१०. NS. भवन्ति ।
११. इतोऽग्रे ग्रन्थान्तरेषु "षष्ठं च नवमं" केचार्धश्लोकस्तदधिकं वर्तते ।

किं? त्वया सुभट[1] दूरवर्जित नात्मनो न सुहृदां प्रियं कृतम् ।
यत्पलायनपरायणस्य ते याति धूलिरधुना रथोद्धता ॥४७॥

यथा—[1][किं ? त्वया कुमतिसङ्गया सदा नाज्ञयेव सुहृदां प्रियं कृतम् ।
यद् सुहृद्वचनरोषकम्पिता याति तूर्णमबला रथोद्धता] ॥४८॥

आद्यं तृतीयमन्त्यं च सप्तमं दशमं गुरु ।
[2]यस्यास्तु त्र्यष्टुभे पादे विज्ञेया स्वागता हि सा ॥४९॥

यथा—अद्य मे सफलमायतनेत्रे ! जीवितं मदनमन्थयभावम् ।
आगतासि भवनं मम यस्मात्स्वागतं तव वरोरु ! नियोव ॥५०॥

[3][षष्ठं च नवमं चैव लघुनी त्र्यष्टुभे यदि ।
गुरूण्यन्यानि पादे तु सा ज्ञेया शालिनी, यथा ॥५१॥

दुःशीलं वा निर्गुणं चापरं वा लोके धैर्यादप्रियं न ब्रवीषि ।
तस्माच्छील साधुवृत्तेः सुवृत्तं माधुर्यात्स्यात्सर्वथा शालिनी त्वम् ॥५२॥

तृतीयं चैव षष्ठं च नवमं द्वादशं तथा ।
गुरूणि जागते पादे यत्र तत्तोटकं भवेत् ॥५३॥

यदि सोऽत्र भवेत्तु समुद्रसमस्त्रिषु चापि तथा नियमेन यतिः ।
सततं जगतीविहितं हि ततं गदितं खलु तोटकवृत्तमिदम्] ॥५४॥

यथा—किमिदं कपटाश्रयदुर्विषह [4]बहुशाठ्यमयोल्बणरूक्षवचम् ।
स्वजनप्रियसज्जनभेदकरं ननु तोटकवृत्तमिदं कुरुषे[5] ॥५५॥

[6][आद्यं तृतीयमन्त्यं च पञ्चमं षष्ठमेव च ।
तथोपान्त्यं जगत्यां च गुरु चेत्कुमुदप्रभा ॥५६ ।

यौ द्विर्वौ तथा न्यौ यदि खलु पादे षड्भिरेव वर्णैर्यदि च यतिः स्यात् ।
नित्यमनिश्चिष्टा जगतिविधाने नामतः प्रसिद्धा कुमुदनिभा सा ॥५७॥

---

दूरवर्जितं प्रियं न कृतम् । हे सुभट, किं त्वया कृतम् (कृतघ्नमित्यर्थः ?) कुत इत्याह यत्पलायनेति ॥४७॥ मदनमथयो भावो यस्य कामफलमिति यावत् ॥५०॥
त्रिभिर्दर्भिति तोटकस्य छेदकस्य वृत्तं चेष्टितम् ॥५५॥

---

१. KSS , NS do not read
२. NS. गुरूणि त्र्यष्टुभे पादे ।
३ NS does not read.
४. KSS , बहुगर्जमिवोद्गणरूक्षवचम् । NS. बहुगण्डमिवोल्बणरूक्षपथम् ।
५. NS प्रकुरु ।
६. NS does not read.

चतुर्थमन्त्यं दशमं सप्तमं च यदा गुरु ।
भवेद्धि जागते पादे तदा स्याद्धरिणप्लुता[1] ॥६८॥

परपवाक्यकशाभिहता[2] त्वया भयविलोकनपार्श्वनिरीक्षणा ।
वरतनु प्रततप्लुतसर्पणैरनुकरोति गतैर्हरिणप्लुतम्[3] ॥६९॥

सप्तमं नवमं चान्त्यमुपान्त्यं च यदा गुरु ।
द्वादशाक्षरके पादे कामदत्तेति सा यथा[4] ॥७०॥

करजपदविभूषिता यथा त्वं सुदति ! दशनविक्षताधरा च ।
गतिरपि [5]चरणावलग्नमन्दा त्वमसि मृगनिभाक्षि ! कामदत्ता ॥७१॥

आद्यं चतुर्थं दशमं सप्तमं च यदा लघु ।
पादे तु जागते यस्या अप्रमेया तु सा यथा ॥७२॥

न ते काचिदन्या समा दृश्यते स्त्री नृलोके विशिष्टा गुणैरद्वितीयैः ।
त्रिलोक्यां गुणाढ्यान् समाहृत्य सर्वान् जगत्यप्रमेयाऽसि सृष्टा विधात्रा ॥७३॥

द्वितीयं पञ्चमं चैव ह्यष्टमैकादशे तथा ।
पादे यत्र लघूनि स्युः पद्मिनी नाम सा यथा ॥७४॥

[6][रश्मिभिः सागराख्या निषिद्धा यदा स्यात् त्रिके च त्रिकैः मुक्तस्या यतिः ।
नन्निषिद्धा जगत्यास्ततस्ता ध्रुवं नामतस्त्वापि सकीर्त्यते पद्मिनी] ॥७५॥

देहतोयाशया वक्त्रपद्मोज्ज्वला नेत्रभृङ्गाकुला दन्तहंसस्मिता ।
केशपाशच्छदा चक्रवाकस्तनी पद्मिनीव प्रिये भासि मे सर्वदा ॥७६॥

[7][फुल्लपद्मानना त्वं द्विरेफेक्षणा केशपत्रच्छदा चक्रवाकस्तनी ।
पीतनीपावली बद्धकाञ्चीगुणा पद्मिनीव प्रिये ! भासि नीरे स्थिता ॥७७॥

आदौ षड्दशमं चैव पादे यत्र सपञ्चमम् ।
शेषाणि तु गुरूणि स्युर्गमिते पुटसंमिता] ॥७८॥

---

परपेत्यादि । भयत्रस्तपलाय्यरपया कशया अभिहता वरतनुर्हरिणप्लुतमिव करोति ॥६९॥

---

१ NS. हरिणीप्लुता ।
२ NS. हिना ।
३. NS. हरिणीप्लुतम् ।
४. KSS. स्मृता ।
५. NS. चरणारविन्दमन्दा ।
६. NS does not read.
७. NS does not read.

यदि चरणनिविष्टौ नौ तथा म्यौ यतिविधिरपि पुनश्चाष्टाभिरिष्टः ।
भवति च जगतीयं सर्वदा सो य इह हि पुटवृत्तं नामतस्तु ॥७९॥
उपवनसलिलानां बालपद्मैर्भ्रमरपरभृतानां कण्टनादैः ।
मदनमदविलासैः कामिनीनां कथयति पुटवृत्तं पुष्पमासः ॥८०॥
[1]द्वितीयाद्ये चतुर्थं च नवमैकादशे गुरु ।
विच्छेदोऽतिजगत्यां तु चतुर्भिः सा प्रभावती ॥८१॥
कथं प्रिये कमलविशाललोचने[1] गहं घनं शिशिरकरे दिवाकरे[2] ।
अचिन्तयन्त्यनिलवशंविघूर्णितं रथमागता सुतनु[1] यथा प्रभावती ॥८२॥
त्रीण्याद्यष्टमं चैव दशमं नैधनत्रयम्[3] ।
गुरूण्यतिजगत्यां तु त्रिभिश्छेदैः प्रहर्षिणी ॥८३॥
भावस्थैर्मधुरकथैः सुभाषितैस्त्वं साटोपस्खलितविलम्बितैर्गतैश्च ।
शोभाढ्यैर्हरसि मनांसि कामुकानां सुव्यक्तं ह्यतिजगती प्रहर्षिणी च ॥८४॥
षष्ठं च सप्तमं चैव दशमैकादशे लघु ।
त्रयोदशाक्षरे पादे ज्ञेयं मत्तमयूरकम् ॥८५॥
विद्युन्नद्धा मेघघनरञ्जितदेहा वातोद्धूता श्येनबलाकाहृतशोभा ।
एते मेघा गर्जितनादोज्ज्वलचिह्ना प्रावृट्काले मत्तमयूरा कथयन्ति ॥८६॥
आद्यौ द्वे चतुर्थं चाष्टमैकादशे गुरु ।
अन्त्योपान्त्ये च शक्वर्यां वसन्ततिलका यथा ॥८७॥

चित्रैर्वसन्तकुसुमैः कृतकेशहस्ता
स्रग्दाममाल्यरचनासुविभूषिताङ्गी ।
नानावतंसकविभूषितकर्णपाशा[4]
साक्षाद्वसन्ततिलकेव विभाति नारी ॥८८॥

---

उपवनेति । पुटस्य मुकुलस्य वृत्तं तथा पोषणं भवति यदि पुष्पम्, एव-मन्यत् ॥७९।८०॥

चित्रैरिति । वसन्तस्य कुसुमसहस्तस्थानि उपमानं हस्तेनेति । साक्षादिति । छन्दानुवर्तिनीत्यर्थः ॥८८॥

---

१. KSS, NS द्वितीयं च चतुर्थं च ।
२ KSS, NS निशाकरे ।
३ KSS, NS नैधनं तथा ।
KSS., NS. विविधभूषितकर्णपाशा ।

पञ्चादौ शक्वरी पादे गुरूणि त्रीणि नैधने[1] ।
पञ्चाक्षरादौ च यतिरसम्बाधा तु सा यथा[2] ॥८९॥

यथा—मानालोकज्ञः सुनवलकुलशीलाढ्यो
यस्मिन्सम्मानं न सदृशमनु पश्येद्धि ।
गच्छेत्तं त्यक्त्वा द्रुतगतिरपरं देशं
कीर्णा नानार्यैरवनिरियमसम्बाधा ॥९०॥

चत्वार्यादौ गुरूणि स्युर्दशमैकादशे तथा ।
अन्त्योपान्त्ये च शक्वर्यां पादे तु शरभा यथा ॥९१॥

यथा—एषा कान्ता व्रजति ललिता वेपमाना
गुल्मैश्छन्नं वनमभिनवैः सम्प्रविद्धम् ।
हा हा कष्टं किमिदमिति नो वेद्मि मूढो
[3]व्यक्तं कान्ते ! शरभललिताख्यं करोषि ॥९२॥

आदौ षट् दशमं चैव लघु चैव त्रयोदशम्[4] ।
यत्रातिशक्वरे पादे ज्ञेया नान्दीमुखी तु सा ॥९३॥

यथा—न खलु तव कदाचित्क्रोधताम्रायताक्षं
भ्रुकुटिवलितभङ्गं दृष्टपूर्वं मयास्यम् ।
किमिह बहुभिरुक्तैर्या ममेष्टा हृदिस्था
त्वमसि मधुरवाक्या देवि ! नान्दीमुखीव ॥९४॥

[5]आद्यं चतुर्थं षष्ठं च नैधनं च यदा गुरु ।
षोडशाक्षरके पादे गजेभललितं तु तत् ॥९५॥

[[6]ग्रो यदि नाट्य नित्यमिह विरचितचरणः
गच्छ तथा च वै भवति निधनमुपगतः ।
स्यादपि चाष्टमेव यदि सततमनुगत
तत्खलु वृषभगजविलसितम्] ॥९६॥

---

नान्दीमुखीति नान्द्या मङ्गलदुन्दुभेरिव मुखं यस्याः ॥९४॥

---

१. KSS., NS. चान्तनः ।
२. NS. स्मृता ।
३. KSS, NS. व्यक्तं कोपाच्छरभललितं वर्तुकामा ।
४. KSS. लघूनि स्युस्त्रयोदश ।
५. ग्रन्थान्तरेषु बहुधा भिद्यते ।
६. NS. does not read.

[यदि हि चरणे न्सौ स्लौ ग क्रमाद्विनिवेशिताः
यदि खलु यति षड्भिर्वर्णैस्तथा दशभि पुन ।
यदि विहितं स्यादत्यष्टि प्रयोगगुणाश्रयं
वृषभललितं वृत्तं ज्ञेयं तथा हरिणीति वा] ॥१०५॥

यथा—गलधररवं श्रुत्वा श्रुत्वा मदोच्छ्रयदर्पितो[1] ।
विलिखित महीं शृङ्गाक्षेपैर्वृष प्रतिनर्दं च ॥
स्वयुवतिवृतो [2]गोष्ठाद्गोष्ठं प्रयाति च निर्भयो[3] ।
[4]वृषभललितं चित्रं वृत्तं करोति च शाद्वले ॥१०६॥

चत्वार्यादौ च दशमं गुरु यत्र त्रयोदशम् ।
चतुर्दशं तथान्त्ये द्वे अष्टादशमथापि च ॥१०७॥
यदा सप्तदशो पादे शेषाणि च लघून्यथ ।
भवन्ति यस्मिन्सा ज्ञेया श्रीधरी नामतो यथा ॥१०८॥

[भो न्मौ च स्मृतचरणविरचितास्तौ गुरू च प्रविष्टौ
इष्टेद शिलष्टो यदि च दशभि स्यात्तयान्यैश्चतुर्भि ।
अष्टाष्टौ च प्रतिनियमिता यत्र स्पष्टरूपा
सा विज्ञेया द्विजमुनिगणै श्रीधरी नामतस्तु] ॥१०९॥

स्नानैश्चूर्णै सुसुरभिगन्धवासैश्च धूपै[5]
पुष्पैश्चान्यै[6] शिरसि रचितैर्वस्त्रयोगैश्च सैस्तै ।
नानारत्नै कनकरचितैरङ्गसंभोगसंस्थै
र्व्यक्तं कान्ते ! कमलनिलया[7] श्रीधरीवातिभासि ॥११०॥

आद्य चतुर्थं षष्ठं च दशमं नैधनं गुरु ।
तद्वंशपत्रपतितं दशभि सप्तभिर्यति. ॥१११॥

---

१. NS., दीप्तस्वरोत्तमनादितो KSS. गर्जन् मदोच्छ्रयदर्पितो ।
२. KSS गोष्ठीगोष्ठं ।
३. KSS. नो भिया ।
४. KSS. ललितमृषभः ।
५. KSS. गन्धुलैः सुधूपैः । NS. गन्धसारैश्च धूपैः ।
६. NS. माल्यैः ।
७. NS निलये ।

यथा एष गम्भीरहृदतटे कलभपरिवृत-
क्रीडति वृक्षगुल्मगहने कुसुमभरनते ।
मेघरवं निशम्य मुदित पवनजववशम्[1]
सुन्दरि ! वनगजपतिः पुनरपि कुरुते ॥११२॥

द्वितीयमन्त्यं षष्ठं चाप्यष्टमं द्वादशं तथा ।
चतुर्दशं पञ्चदशं पादे सप्तदशाक्षरे ॥११३॥

भवन्ति यत्र दीर्घाणि शेषाणि च लघून्यथ ।
विलम्बितगतिः सा तु विज्ञेया नामतो यथा ॥११४॥

[यदा द्विरचितौ हि पादमभिसंश्रितौ ज्सौ त्रिकौ
तथैव च पुनस्तयोर्निधनमाश्रितौ यौ लगौ ।
तदाप्विरतिपूर्विका यतिरपि स्वभावाद्यथा
विलम्बितगतिस्तदा निगदिता द्विजैर्नामतः] ॥११५॥

यथा विघूर्णितविलोचना पृथुवि[2]कीर्णहारा पुन
प्रलम्बरशना [3]स्खलत्स्खलितपादमन्दक्रमा ।
न मे प्रियमिदं जनस्य बहुमानरागेण च
मदेन विवशा विलम्बितगतिः कृता त्वं प्रिये ! ॥११६॥

पञ्चाद्यौ पञ्चदशकं द्वादशैकादशे गुरु[4] ।
चतुर्दशं [5]तथान्त्ये द्वे चित्रलेखा धृतौ स्मृता ॥११७॥

यथा नानारत्नाढ्यैर्बहुभिरधिकं भूषणैरङ्गसक्तै-
र्नाना गन्धाढ्यैर्मण्डनकरणैरङ्गरागैर्विचित्रैः ।
[6]वेणीं स्नानाढ्यैः कुसुमभरितैर्वस्त्ररागैश्च तैस्तैः
कान्ते ! [7]सङ्क्षेपात् किमिह बहुना चित्रलेखेव भासि ॥११८॥

अन्त्यं सप्तदशं चैव षोडशं सचतुर्दशम् ।
त्रयोदशं द्वादशं च षष्ठमष्टममेव च ॥११९॥

---

१. KSS. मुदितपवनजववशात् ।
२. KSS. विपुलंहारा ।
३. NS. स्खलत् ।
४. NS द्वादश मानुर्य गुरु ।
५. NS. तथा पञ्च ।
६ KSS. स्नानाढ्यैः कुसुमरचितैर्वस्त्ररागैश्च तैस्तैः ।
७. NS. सद्येव किमिति ।

ग्रीष्यादौ च गुरूणि स्युर्यस्मिंस्त्वेकोनविंशके ।
पादे लघूनि शेषाणि शार्दूलक्रीडित तु तत् ॥१२०॥

[म्सौ ज्सौ तौ गुरु च प्रयोगनियता यस्मिन्निविष्टास्त्रिका
आद्या चान्त्ययतिश्चतुस्त्रिकयुता ज्ञेया परा सप्तभि ।
नित्य यत्पदमाश्रिता द्युतिधृतिर्नित्य कवीनां प्रिय
तज्ज्ञेय खलु वृत्तजातिनिपुण शार्दूलविक्रीडितम्] ॥१२१॥

यथा—नानाशस्त्रशतघ्नितोमरहता प्रभ्रष्टसर्वायुधा
निर्भिन्नोदर[1]पादबाहुवदना निर्भासिता. शत्रव ।
धैर्योत्साहपराक्रमप्रभृतिभिस्तैस्तैर्विचित्रैर्गुणै
र्वृत्तं ते रिपुघाति भाति समरे शार्दूलविक्रीडितम् ॥१२२॥

[तावत्त्वं विजितेन्द्रिय शुभमते सर्वात्मना प्रत्यहं
दाने शीलविधौ च योजय मन स्वर्गापवर्गावहम् ।
यावद् व्याधिजराप्रचण्डनखरो व्यात्यसटाभिर्मृदा
मृत्युस्ते न करोति जीवितमृगं शार्दूलविक्रीडितम्] ॥१२३॥

चत्वार्यादौ च षष्ठ च सप्तम सचतुर्दशम् ।
तथा पञ्चदश चैव षोडश नैधन तथा ॥१२४॥
एतानि च गुरूणि स्यु शेषाणि तु लघून्यथ ।
पादे यत्र कृतौ ज्ञेया नाम्ना सुवदना तु सा ॥१२५॥

[म्रौ भ्नौ य्भौ लगौ च सम्यग्यदि च विरचिता. पादे क्रमवशात्
विच्छेद सप्तभि स्यात्पुनरपि च यति सप्ताक्षरकृता ।
मध्येषा संश्रिता स्यात्कृतिमपि च पुन श्लिष्टाक्षरपदा
विद्वद्भिर्वं सजातौ तन इह गदिता नाम्ना सुवदना] ॥१२६॥

यथा—नेत्रे लीलालसान्ते कमलदलनिभे भ्रूचापविनते[2]
[3]रक्तोष्ठ पीनमध्य समसहितघना स्निग्धाश्च दशना ।
[4]कर्णावंसप्रलम्बौ चिबुकमपि नत घोणा सुरुचिरा
व्यक्त त्व मर्त्यलोके वरतनु ! विहितास्येना सुवदना ॥१२७॥

चत्वार्यादौ तथा षष्ठ सप्तम च चतुर्दशम् ।
अष्टादश सप्तदश तथा पञ्चदश पुन. ॥१२८॥

---

१. NS. हस्त । KSS बाहुवक्त्रनयना निर्भर्त्सिता ।
२. NS. निहिते ।
३. NS. गण्डोष्ठं ।
४. NS. कर्णौ पार्श्वांशलम्बौ ।

अन्त्योपान्त्ये गुरुण्यत्र लघून्यन्यानि सर्वदा ।
एकविंशतिके पादे स्रग्धरा नाम सा यथा ॥१२९॥

[म्रौ भ्नौ यौ यत्र सम्यग्यदि हि विरचिता सुश्लिष्टका पादयोगे
वर्णैः पूर्वोपदिष्टैर्यतिरपि च पुनः सप्तभिः सप्तभिः स्यात् ।
वृत्तं सम्यग्यदि स्यात्प्रकृतिमनुगतं तत्त्वविद्भिः प्रदिष्टं
विज्ञेयं वृत्तजातौ कविजनदयिता स्रग्धरा नामतस्तु] ॥१३०॥

यथा—चूताशोकारविन्दं कुरबकतिलकं कर्णिकारं शिरीषं
पुन्नागं पारिजातं बकुलकुवलयं किंशुकं सातिमुक्तं ।
एतैर्नानाप्रकारं बहुलसुरभिभिर्मिश्रकोणैश्च ततं
वासन्तं पुष्पवृन्दैर्नरवर[1] वसुधा स्रग्धरेवाद्य भाति] ॥१३१॥

चतुर्थमाद्यं षष्ठं च दशमं द्वादशं तथा ।
षोडशाष्टादशे चैव नैधनं च गुरूण्यथ ॥१३२॥

द्वाविंशत्यक्षरे पादे शेषाणि च लघून्यथ ।
भवन्ति यत्र तज्ज्ञेयं मद्रकं नामतो यथा ॥१३३॥

[म्रौ चरणे यदा विनियतौ म्रियौ क्रमयुतावथाकृतिविधौ
ग्नौ च ततः परं च रचितावनन्तरकृतौ नगावपि पुनः ।
तच्च दशाष्टवर्णरचिता चतुर्ष्वपि तथा यतिश्च सततं
भद्रकवृत्तमेव तनु नाट्ययोगगुणसंयुतं निगदितम् ॥१३४॥

[1]उत्प्लुतभैरवहस्तचरणं द्वितीयकररेचितं[2]
पदमृदङ्गवाद्यमधुरं विविधकरणानुगं बहुविधम् ।
मद्रकमेतदद्य सुभगे[1] विदग्धगतिचेष्टितं सुललितं
नृत्यसि विभ्रमाकुलपदं विचित्ररसभावितं शशिमुखि[1] ॥१३५॥

आद्यमेकोनविंशं च सप्तमं सत्रयोदशम् ।
एकादशं सप्तदशं पञ्चमं च गुरूण्यथ ॥१३६॥

शेषाणि च लघूनि स्युर्विंशत्यक्षरके बुध ।
वृत्तं तदश्वललितं विज्ञेयं नामतो यथा ॥१३७॥

[यदि च नकार आदिरचितः पदे विरचितोऽन्त एव च समौ
यदि च जनौ त्रियौ च विहितौ क्रमेण गनु मध्यतोऽपि तथा ।
यदि च समाश्रिता हि विहिता यतिश्च दशभिर्नवैश्च सहितं
रतत इह कीर्तितं मुनिभिरश्वविपुलचरितं तदश्वललितम्] ॥१३८॥

---

१. KSS., उत्पुल्ल NS उन्न ।
२. NS. गललित ।

[1]विविधतुरङ्गनागरथयोधसङ्कुलमलं त्वया समुदितं
शरशतशबलितकुन्तपरिघासियष्टिचितं [2]बहुप्रहरणम् ।
रिपुशतमुक्तशस्त्ररवभीतशङ्कितभट भयाकुलदिशं
कृतमभिवीक्ष्य संयुगमुखे समर्पितगुण त्वयाऽवलसितम् ॥१३९॥

षष्ठादावष्टमं चैव ह्येकादशचतुर्दशे ।
विंशं सप्तदशं चैव त्रयोविंशं तथैव च ॥१४०॥

एतानि च लघूनि स्युः शेषाण्यथ गुरूणि च ।
चतुर्विंशतिके पादे मेघमालेति सा यथा ॥१४१॥

[3][यदि खलु चरणस्य तौ नौ त्रिकौ कृतिकारव्यास्तथा रा स्युः क्रमाद्
भवति यदि यतिस्तथा सप्तभिः सप्तभिस्त्रिभ्यतोऽन्या यति पञ्च विद्यात्तथा ।][4]
पवनबल[5]समाहृता [6]तीव्रगम्भीरनादा बलाकावलीमेखला
क्षितिधरसदृशोच्चरूपा महानीलधूमाञ्जनाभाम्बुगर्भोद्भवा[7] ।
सुरपतिधनुरुज्ज्वलाबद्धकक्ष्या[8] तडिद्द्योतसन्नाहपट्टोज्ज्वला[9]
[10]गगनतलविसारिणी प्रावृषेण्या दृढं मेघमालाधिकं शोभते ॥१४२॥

आद्यं चैव चतुर्थं च पञ्चमं षष्ठमेव च ।
नवमं दशमं चैव नैधनं तु भवेद् गुरु[11] ॥१४४॥

लघून्यथानि शेषाणि पादे स्युः पञ्चविंशके ।
वृत्ते सा तु विज्ञेया क्रौञ्चपादीति नामतः ॥१४५॥

---

१. KSS. रथहयनागयोधपुरुषै. ।
२. KSS निवृत ।
३. NS. does not read.
४. GOS. reads after this—

सततमभिनिविष्टदेहा तथा सकृती सूरिभिः सर्वदा दृश्यते ।
तत्र हि परिभाषिता शास्त्रविद्भिस्त्वियं मेघमाला यथा दण्डकः ।

५. NS. जव ।
६. KSS तीव्रनादा वालाकावली मेखला शोभिना ।
७. NS क्षितिधरसदृशोर्ध्वरूपा महाधूमपुञ्जायमानाम्बुगर्भोद्भवा ।
८. NS. शोभा ।
९. NS. वन्योज्वला ।
१०. NS., गगनतलविचारिणी प्रावृषि प्रोन्नता । KSS- प्रावृषेण्योन्नता ।
११. KSS., NS अन्त्यं चैव गुरुण्यथ ।

[1][न्मौ यदि पादे स्यातामपि चेष्टावभिहतिरपि च हि यदि खलु विहिता
नाव्य समुद्रा स्तुविनिविष्टा यदि च खलु गुरु भवति निधनगतम् ।
पञ्चनिरासो देवमुपेता पुनरपि यतिरिह यदि खलु तदापि
क्रौञ्चपदेयं वृत्तविधाने सुरगणपितृगणमुनिगणविहिता] ॥१४६॥

यः किल दाव विद्रुतमोम अनुचरमवममरगतदनम ।
पातितपूर क्षिप्तकपाल विचयनमर्ममिथमथुरवरकम् ॥
कार्मुकमुक्तेनाशु चकार व्यपगतसुरगणनिनृगममिगुणा ।
निरयमसौ ते दैत्यगणारि प्रदहतु मन्मथमिव रिपुगणमणिलम् ॥१४७॥

[2][या कपिलाक्षी पिङ्गलकेशी
कलिरुचिरनुदिनमनुनयकठिना
दीर्घतरानि स्थूलशिरानि
परिवृत्तचतुरनिरतमकुटिलगति ।
आयतजङ्घा निम्नकपोला
लघुतरकुचयुगपरिगतहृदया
सा परिहार्या क्रौञ्चपदा स्त्री
ध्रुवमिह निरवधि सुखमभिलषता] ॥१४८॥

अष्टावासौ गुरूणि स्युरस्या षङ्जोर्निकारम्
एवंविध च विज्ञेय चतुर्विश सतंपनम् ॥१४९॥

एतानि गुरु मस्यानि शेषाणि च लघून्यथ[3] ।
[4]पड्विंशत्यक्षरे पादे तद्भुजङ्गविजृम्भितम् ॥१५०॥

[5][यस्यां मो तो ना सौ नित्यं प्रनियरयमथ
गदितवतस्थिता; सुन्दुपम ।
पड्विंशत्यक्षोनायां च यदि हि
खलु यतिरभिता वसुभिरपाप्दानि ॥

क्पोपेतामिति । भुजङ्गविजृम्भिन कृत्वा भगवतो हस्ते न्यस्तम् ॥१५०।१५१॥

---

१. KSS, NS. *do not read*
२. NS. does not read
३. KSS, NS. पादे षड्विंशत्यक्षरे ।
४ KSS. NS. अत्र नाम्ना तथा ज्ञेय ।
५. KSS, NS. do not read.

पश्चादन्त्यौ ल्गौ सयोज्यौ यदि भवति
मनुजदयिता समाश्रितमुत्कृति
नाम्ना वृत्त लोके ख्यात कविवदन-
विकसनपर भुजङ्गविजृम्भितम्] ॥१५१॥

यथा—रूपोपेता देवं सृष्टां समदगज-
विलासिनगति निरीक्ष्य तिलोत्तमां
[1]प्रादक्षिण्यात्प्राप्ता द्रष्टुं बहुवदन—
मचलनयन शिर कृतवान् हरि ।
दीर्घं विश्वम्यान्तर्गूढ स्तनवदन-
जघनरुचिरां निरीक्ष्य तया पुनः
[2]पृष्ठे न्यस्त वेवेन्द्रेण प्रवरमणि-
कनकवलय भुजङ्गविजृम्भितम् ॥१५२॥

[दण्डक मार्यविशं यमुत्कृतेरधिश्तरम्
मेधमालादिक तस्यान्नो वाचो कागुहा त्रिका ]

यथा—मुदितजनपदाकुला स्फीतसस्याकरा भूतधात्री भवन्त समभ्यर्चति
द्विरदकरविलुप्तहिन्तालनालीवनास्त्वा नमस्यन्ति विन्ध्यादय. पर्वता
स्फुटितवलशङ्खु[3]वितनिर्गीर्णमुक्ता फलैर्दमिहस्तैर्नमस्यन्ति य सागरा
मुदितजलचराकुला सम्प्रकीर्णामला कीर्तयन्तीव कीर्ति महानिम्नगा ] ॥१५४॥

एतानि समवृत्तानि मयोक्तानि द्विजोत्तमा ।
नियमार्धसमाना तु तुनर्वक्ष्यामि लक्षणम् ॥१५५॥
यत्र पादास्तु विषमा नानावृत्तसमुद्भवा. ।
ग्रथिता पादयोगेन तद् वृत्त विषम स्मृतम् ॥१५६॥
द्वौ समौ द्वौ च विषमौ वृत्तेऽर्धविषमे तथा ।
सर्वपादैश्च विषमैर्वृत्त विषममुच्यते ॥१५७॥

---

नानावृत्तसमुद्भवा इत्यनेन तुल्यच्छन्दसां वृत्तानां लक्षण पृथक् पृथक् पादे विरचय्य स्वय विषमता ऊह्या इत्याह ॥१५६॥

द्वौ समाविति प्रथमतृतीयौ द्वितीयचतुर्थौ । द्वौ विषमाविति प्रथमद्वितीयौ तृतीयचतुर्थौ, वीप्सागर्भमेतत् द्वाविति ॥१५७॥

---

१. NS. प्रादक्षिण्य प्राप्ता…… । KSS. प्राप्त दृष्टु बहुवदननयनमहिता निरम्नुनवान्हर ।
२. NS षष्ठे ।
३. KSS , NS मुन्कीर्णमुक्ताफलै ।

ह्रस्वाद्यमथ दीर्घाद्यं दीर्घं ह्रस्वमथापि वा ।
युग्मौजविषमं पादैः[1]वृत्तमर्धसमं भवेत् ॥१५८॥

पादे सिद्धे समं सिद्धं विषमं चापि विश्रुतम् ।
द्वयोरर्धसमं विद्याद्वेदस्तु पादतः ॥१५९॥

छेदस्तु ये मया प्रोक्ता समवृत्तविकल्पिताः ।
त्रिकं विषमवृत्तानां सम्प्रवक्ष्यामि लक्षणम् ॥१६०॥

[नैधनेऽन्यतरस्यां यं प्रथमे पाद इष्यते ।
द्वितीये चरणे च स्यादित्यनुष्टुप् समाहतः] ॥[1]६१॥

सौ गौ तु प्रथमे पादे स्तौ ग्गौ चापि द्वितीयके ।
[2]युग्मेऽर्धविषमे पादे ज्ञेया पथ्या तु सा त्रिके ॥१६२॥

प्रियदर्शनमित्राऽसि प्रियसंबधिवाग्यथा ।
[3]प्रियदानरता पथ्या [4]दयिते ! त्वं प्रियासि मे ॥१६३॥

[स्तो गो तु प्रथमे पादे स्तौ ग्गौ च द्वितीयके ।
पादे भो ग्गौ तृतीये च चतुर्थे तु ततो लगौ ॥१६४॥

नैवाचारो न ते मित्रं न नवग्निगुणप्रिया ।
तथया सर्वविषमा पथ्या न भवसि प्रिये !] ॥१६५॥

[5]अयुजोर्लक्षणं ह्येतद्विपरीतं तु यत्र च ।
पथ्या हि विपरीता सा विज्ञेया नामतो यथा ॥१६६॥

[6]कृतेन रमणस्य किं सति ! रोषेण तेऽधुना ।
विपरीता न पथ्यासि त्वं जरे ! केन मोहिता ॥१६७॥

---

सिद्ध इति लक्षिते । सर्वपादविकल्पितैः लक्षणोपलक्षितैः छेद द्वयोरन्यतरापि । छेद इति पादेषु विभाग इत्यर्थः ॥१५९॥ समवृत्तविकल्पेन समवृत्तेषु विकल्पिता ये भिन्नाश्छेदा' ते प्रोक्ता ॥१६०॥

---

१. KSS., NS. तद्वत्समसम स्मृतम् ।
२. KSS., NS. एव युग्मौजयो ज्ञेयो पथ्यावृत्ते त्रिकौ यदा ।
३. KSS. प्रियदानवता ।
४. KSS., यद्यपि NS. दयिता ।
५. KSS. युग्मयो. ।
६. KSS., NS. *omits*.

चतुर्थादक्षराद्यत्र त्रिलघु स्यादयुक्ततः ।
अनुष्टुप्चपला सा तु विज्ञेया नामतो यथा ॥१६८॥

न खल्वस्याः प्रियतम श्रोतव्य व्याहृत त्वया ।
नारदस्य प्रतिकृति कथ्यते चपला हीयम् ॥१६९॥

विपुला तु युजि ज्ञेया लघुत्वात्सप्तमस्य तु ।
[1]सर्वत्र सप्तमस्यैव केषाञ्चिद्विपुला यथा ॥१७०॥

संक्षिप्ता वज्रमध्ये हि हैमकुम्भनिभस्तनी ।
विपुलाऽसि प्रिये ! श्रोण्यां पूर्णचन्द्रनिभानने ! ॥१७१॥

गङ्गेव मेघोपगमे आप्लावितवसुन्धरा ।
कूलवृक्षानारुजन्ती प्रयन्ती विपुला बलात्[2] ॥१७२॥

[आगता मेघसमये भीरु भीरुकुलोद्गते ! ।
एकरात्रौ परगृह चौरो बन्धनमर्हसि] ॥१७३॥

एव विविधयोगात्तु[3] पथ्यापाद्या भवन्ति हि ।
युग्मौजविषमे पादे शेषैरन्यैस्त्रिकैरथ ॥१७४॥

गुर्वन्तक सर्वलघुस्त्रिको नित्य हि नेष्यते ।
प्रथमादक्षराद्यत्र चतुर्थात्प्राग्लघुः स्मृत[4] ॥१७५॥

पथ्यापादं समाश्रित्य श्रीष्यन्ते तु गुरुत्रय ।
भवन्ति पादे सततं बुधैस्तद्वक्त्रमिष्यते ॥१७६॥

दन्तक्षताधर सुभ्रु ! जागरग्लाननेत्रं च ।
[5]रतिसम्भोगखिन्नं ते दर्शनीयतरं वक्त्रम् ॥१७७॥

[इत्येषा सर्वविषमा नामतोऽनुष्टुबुच्यते ।
तद्विदां मतवैषम्य त्रिकाक्षरतस्तथा] ॥१७८॥

---

सगुर्वन्त इति गुर्वन्तः स सर्वलघु न', त्रिकौ नेष्येते । प्रथमादक्षरादनन्तर चतुर्थादक्षरादूर्ध्वं तु अन्लघु' यकारस्तु नेष्यते । एतानि न प्रयोज्यानि इत्यर्थ ॥१७५॥

---

१. KSS सप्तमस्यैव केषाचित् विपुलैव तु सा यथा ।
२. NS. विपुलान् बलात् ।
३. NS. योगैस्तु ।
४. KSS लघु स्मृतम् ।
५. KSS. प्रातः सम्भोगखिन्न ते दर्शनीयतम ।

पादे षोडशमात्रास्तु [1]गाथाङ्गकविकल्पिता ।
चतुर्भिरष्टकैर्ज्ञेया वृत्तज्ञैर्यानवासिका ॥१७९॥

असंस्थितपदा सुविह्वलाङ्गी मदस्खलितचेष्टितैर्मनोज्ञा ।
क्व यास्यसि वरोरु ! सुरतकाले विषमा किं ? यानवासिका त्वम् ॥१८०॥

[2][रजौ स्गौ च प्रथमे पादे तथा चैव तृतीयके ।
केतुमत्यां यथा प्रोक्ता भौ रगौ गश्च सदा युजे ] ॥१८१॥

स्फुरिताधरं चकितनेत्र रक्तकपोलमम्बुजदलाक्षम् ।
किमिदं रुषापहृतशोभं केतुमतीसमं वद मुखं ते] ॥१८२॥

अयुजस्यापरवक्त्रस्य पादौ नौ रो लगौ त्रिषु ।
नजौ रजौ द्वितीये च ज्ञेयाश्च पुनरेव तु ॥१८३॥

[प्रथमे च तृतीये नौ रलौ गश्च प्रकीर्तितः ।
गणाश्चापरवक्त्रे तु नजौ ज्रौ द्विचतुर्थयोः ] ॥१८४॥

सतनु ! जलपरीतलोचनं जलधरनिरुद्धमिवेन्दुमण्डलम् ।
किमिदमपरवक्त्रमेव ते शशिवदनेऽद्य मुखं पराङ्मुखम् ॥१८५॥

नौ यौ तु प्रथमे पादे न्जौ ज्रौ गश्च तथापरे ।
यत्र तत्पुष्पिताग्रा स्यादेवं शेषं तु पूर्ववत् ॥१८६॥

पवनबलविधूतचारुशाखं
प्रमुदितकोकिलकण्ठनादरम्यम् ।
मधुकरपरिगीयमानशब्दं
वरतनु ! पश्य वनं सुपुष्पिताग्रम् ॥१८७॥

रजौ रजौ चादौ यथा न्सौ ज्सौ न्सौ ज्सौ गश्च तथा पुनः ।
रजौ रजौ गश्च त्रिकाः ह्येते उद्गताया प्रकीर्तिता ॥१८८॥

तव रोमराजिरतिभाति सुतनु ! मदनस्य मञ्जरी ।
नाभिकमलविवरोत्पतिता भ्रमरावलीव कुसुमात्समुद्गता ॥१८९॥

रजौ स्लौ च ततो न्सौ ज्गौ नौ सौ चेति तृतीयके
रजौ रजौ गश्च चतुर्थे तु ललिताया यथा स्मृता ॥१९०॥

ललिताकुसुमप्रविचलिताग्र वसन कर चारुपल्लवा ।
प्रविकसितकमलकान्तिमुखी प्रविभाति देवी सुरतपमातुरा ॥१९१॥

---

१. KSS. निरावृत ।
२ अत्र परमेतावत्पद्यानि ग्रन्थान्तरेषु न सन्ति ।

एवमेतानि वृत्तानि समानि विषमाणि च ।
[1]नाटकाद्येषु काव्येषु प्रयोक्तव्यानि सूरिभि ॥१९२॥

सन्त्यन्यान्यपि वृत्तानि यान्युक्तानीह पिण्डश ।
न च तानि [2]प्रयोज्यानि न शोभां जनयन्ति हि ॥१९३॥

यान्यत. प्रतिषिद्धानि गीतके तानि योजयेत् ।
[3]ध्रुवायोगे तु वक्ष्यामि तेषां चैव विकल्पनम् ॥१९४॥

वृत्तलक्षणमेव तु[4] समासेन मयोदितम् ।
अत ऊर्ध्वं प्रवक्ष्यामि ह्यार्याणामपि लक्षणम् ॥१९५॥

पथ्या च विपुला चैव चपला मुखतोऽपरा ।
जघने चपला चैव आर्या पञ्च प्रकीर्तिताः[5] ॥१९६॥

[आसां तु सम्प्रवक्ष्यामि यतिमात्राविकल्पनम् ।
लक्षणं नियमं चैव विकल्पगुणसम्भवम् ॥१९७॥

यतिश्छेदस्तु विज्ञेयश्चतुर्मात्रो गण स्मृतः ।
द्वितीयान्त्यौ युजौ पादावयुजौ त्वपरौ स्मृतौ ॥१९८॥

गुरुमध्यविहीनस्तु चतुष्पंचसमन्वित. ।
अयुग्गणो विघातश्यो युग्गणस्तु यथेप्सितः ॥१९९॥

[6]षष्ठो हि द्विविकल्पस्तु नैधनो ह्येकमस्थितः ।
[7]पश्चार्धे तु षष्ठ स्यादेकमात्रस्तु[8] केवलः ॥२००॥

---

ननु हृतशोभानीति चेत् कथं प्रयोज्यानीत्याह-यान्यत्र प्रतिषिद्धानीति । गीते पठ्यमानत्वाभावात् न वृत्तगता मध्यनापेक्षेति केवल तालयोजनार्थं साम्यमवश्य कर्तव्यमिति मात्राणां वर्णानां नियमस्तत्राश्रीयते ॥१९३।१९४॥

---

१. KSS नाटकादिषु ।
२. NS. मयोक्तानि ।
३. KSS., NS. ध्रुवाविधाने व्याख्यास्ये ।
४. KSS., NS. एतत्तु ।
५. KSS. पञ्चविधाः स्मृताः ।
६. KSS,. षष्ठश्च NS. षष्ठश्च ।
७. KSS , पश्चार्धे NS. पश्चाद्धा ।
८. KSS , NS. एकमात्र. स उच्यते ।

द्विविकल्पस्तु षष्ठो यो गुरुमध्यो भवेत् स ।
[1]तथा सर्वलघुश्चैव यतिसञ्ज्ञासमाश्रिता ॥२०१॥
[2][द्वितीयाद्विलघुर्ज्ञेय सप्तमे पञ्चमे यतिः ।
प्रथमादिरथान्त्ये च पञ्चमे या विधीयते ॥२०२॥
गणेषु त्रिषु पादस्य यस्या पथ्या तु सा भवेत् ।
एतस्य विपुलान्या तु विज्ञेया यतिलक्षणा ॥२०३॥
अयुजः सर्वगुरवो गुरुमध्या गणा युजः ।
यस्याः स्युः पादयोगे तु विज्ञेया चपला हि सा ॥२०४॥
त्रिंशदाद्ये तु विज्ञेया सप्तविंशति चापरे ।
उभयोरर्धयोर्ज्ञेयो मात्रापिण्डो विभागशः ॥२०५॥
त्रिंशत्तस्यास्तु यदि स्युरेतानि द्विगुणानि तु ।
श्रीण्यक्षराणि चान्यानि न्यस्य सर्व्यार्धविभागशः ॥२०६॥
एतानि लघुसञ्ज्ञानि निर्दिष्टानि समासतः ।
सर्वासां चैवमार्याणामक्षराणां यथाक्रमम् ॥२०७॥
अर्धाष्टमगणार्या च सर्वार्या प्रकीर्तिता ।
षष्ठश्च द्विविकल्पस्तु नैधने ह्येकसंस्थितः ॥२०८॥
पश्चाद्यो यो गण षष्ठ एकमात्र स उच्यते ।
द्विविकल्पस्तु य षष्ठो गुरुमध्यो भवेत् स ॥२०९॥
यथा सर्वलघुश्चैव यति सञ्ज्ञासमाश्रिता ।
सा द्वितीया द्विलघुका सप्तमे प्रथमे यति ॥२१०॥
गुरुमध्यविहीनात्तु चतुर्गणसमन्वित ।
अयुग्गणो विज्ञातव्यो युग्गणात् ] एव च[3] ॥२११॥

---

सर्वाष्टमो गण । अर्धाष्टमो गण गणाद्य । चतुर्मात्रा यस्मात्तावन्तोऽर्थः यः स्यात् ॥२०८॥ षष्ठो गणो द्विभेद । तस्य एकभेदमाह पश्चाद्यो य षष्ठो गणः तस्मिन् वर्तमाने लघुरेव वर्तमानस्य स्थाने गुरुमध्यो ज इत्यर्थ ॥२०९॥ सर्वलघु चतुर्लघु-त्वात्र च द्वितीयादारभ्य [illegible] वर्तते, अन्य च प्रथमा-दिर्यति, पञ्चमे च गणे समाप्ते यति ॥२१०॥

अयुग्गण इति विषम प्रथमतृतीयपञ्चमसप्तमकः । युग्मश्च सम । स एव चेति [illegible] न सर्वं इति यावत् ॥२११॥

---

१. NS. यथा ।
२ कोष्ठबद्धश्लोका ग्रन्थान्तरेषु न पठिताः ।
३. KSS., NS. प्रमाणवर्णैश्च पञ्चम ।

[1]प्रथमतृतीयौ पादौ द्वादशमात्रौ भवेत्तु सा पथ्या ।
विपुलान्या खलु गदिता पूर्वोदितलक्षणोपेता ॥२१२॥

पथ्या यथा—रक्तमृदुपद्मनेत्रा सितदीर्घबहुलमृदुकेशी ।
कस्य तु पृथुमृदुजघना तनुबाहु सोदरी पथ्या ॥२१३॥

विपुला यथा—

विपुलजघनवदनस्तननयनैस्ताम्राधरोष्ठकरचरणैः ।
आयतनासागण्डैर्ललाटकर्णैः शुभा कन्या ॥२१४॥

[2]द्वितीयस्य चतुर्थस्य गुरुमध्यगतो भवेत् ।
उभयोरर्धयोर्यत्र विज्ञेया चपला यथा[3] ॥२१५॥

यथा—उद्भटगामिनी परुषभाषिणी कामचिह्नकृतवेषा ।
जानाति मांसयुक्ता सुराप्रिया सर्वतश्चपला ॥२१६॥

पूर्वार्धे लक्षणं ह्येतदस्या रा च मुखेन तु ।
पश्चिमार्धे तु चपला यस्या सा जघनेन तु ॥२१७॥

मुखचपला यथा—

आर्यामुखे तु चपला तथापि चार्या न मे मतः सा किम् ।
दक्षा गृहकृत्येषु तथा दुःखे भवति दुःखार्ता ॥२१८॥

जघनचपला यथा—

वरमृगनयने ! चपलासि वरोरु ! शशाङ्कदर्पणनिभास्ये ! ।
कामस्य [4]सारभूते ! न पूर्वमदचारुजघनेन ॥२१९॥

[5]उभयोरर्धयोरेतल्लक्षणं दृश्यते यदि ।
वृत्तज्ञैः सा तु विज्ञेया सर्वतश्चपला सखि ! ॥२२०॥

---

अर्धद्वयेऽपि गणत्रये छेदः कर्तव्यः सैव पाद उच्यते तदाह प्रथमतृतीयौ पादौ द्वादशमात्राविति । प्रथमेऽर्धे गणत्रयं प्रथमः पादः । द्वितीयेऽर्धे चान्यद् गणत्रयं तृतीयः पादः ॥२१२॥ पथ्येति पथिसाध्वित्यर्थः ॥२१३॥

आर्याणां भेदं दर्शयितुं तत्प्रस्तारमाह ।

---

१ NS varies

२. KSS varies.

३. अत्र पर काशीमुद्रितपुस्तके सार्धचतुष्टयपद्यमधिकम् ।

४ KSS., NS. सारभूतेन ।

५. KSS, NS. vary absolutely.

इतरार्धे ज षष्ठन्तु नलघुगण इष्यते[1] ।
[2]वृत्तैरेव तु विविधैर्नानाछन्दस्समुद्भवैः ॥
काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः ॥२२७॥

इति भरतीये नाट्यशास्त्रे [3]छन्दोविचितिर्नाम पञ्चदशोऽध्यायः[4] ।

---

अध्यायार्थमुपसंहरन् भाविनं विषयमासूत्रयति वृत्तैरित्यादि । काव्यबन्धा यत्नेनेदमाह यथा प्रासादकुड्यादिके कर्तव्ये प्रथमं भूमिः, तद्वत्काव्ये निर्मातव्ये भूमिकल्पः शब्दच्छन्दोविधिः शब्दपरिग्रहः वृत्तसमाश्रयमित्यादि विरचयन् भित्तिस्थानीयं लक्षणयोजनं चित्रकर्मप्रतिममलङ्कारगुणनिवेशनं गवाक्षवातायनादिदेशीयो दशरूपकविभागः, उपयोगनिरूपणाप्रख्या काक्वादिप्लुतिः, एवम्भूतवाचिकाभिनयस्वरूपं चतुर्दशादिभिः षड्भिरध्यायैरुच्यते । तत्राध्यायद्वयं वृत्तलक्षणविधानं तु भविष्यति ।

यद्यपि रूपकविरचनकाले परिपक्वप्रज्ञस्य न क्रमप्रतिभासस्तथाप्यपोद्धारधिया कल्प्यत इत्याह । प्रबन्धस्य यो युक्तोऽभ्यासः तन्निष्पत्तिः प्रबन्धाभ्यासः, तत्सम्पत्तिः अभिनेयार्थनिर्वर्तनं तदभिनयोपारोहणमिति स एव क्रम इत्युपाध्यायः यदाह —

महाकवीनां पदवीमुपात्तामारुरुक्षताम् ।
नासम्मृश्य पदस्पर्शान्यपत्सोपानपद्धतिः ॥इत्यादि॥

अभ्यासस्तुते हि सति नाटकादिविरचयिता महान्तः प्रमादास्पदाः भवन्ति । न हि सर्वो वाल्मीकिर्व्यासः कालिदासो भट्टेन्दुराजो वा, तेषामपि प्राग्जन्मार्जित-कर्माभ्यासमनुदिनसंस्कारपाटवोत्पादितः कुलप्रतिभज्ञानातिशय इति शिवम् ॥२२७॥

इति पञ्चदशाध्याये ध्यायिना परमेश्वरम् ।
इनाभिनवगुप्तेन गुप्तार्थं—प्रकटीक्रिया ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेद-
विवृतावभिनवभारत्यां वृत्तविधिर्नाम

पञ्चदशोऽध्यायः ।

---

१. KSS. NS स विकल्पो भवेद्गणः ।
२. NS. एव चतुर्विधवृत्ते ।
३. NS. छन्दोवृत्तविधि ।
४. KSS. षोडशोऽध्याय ।

□□□

## अभिनवभारती

विशेषोपयोगितया वृत्त्यङ्गवाचोयुक्तिः, काव्यगतस्यातिप्राशस्त्योपयोगितया महापुरुषगतपाशध्वजादिपादरेखावल्लक्षणशब्दवाच्यता । तदुक्तं तत्रैव—

लक्षणान्येव बीजार्थक्रमनिर्वाहकानि च ॥ इति,
प्रतिसन्धिनदङ्गानि फलसिद्ध्युपपत्तितः ॥ इति ।

काव्ये धीरोदात्तादिगुणाधान वस्तुवर्णनाभङ्गिरिति केचित् ।

तदत्र प्रथमपक्षे वर्णनीयप्रधानभूताधिकारिपुरुषगतगुणादिविभाग एव काव्ये पर्यवसीयते । द्वितीयपक्षे तु वर्णनीय. सरल एवेति । वृत्तिलक्षणोऽयं काव्यभेदात् तथा विभज्यते । एतेषां तु दर्शने—कवेर्यं प्रतिभात्मा प्रथमपरिस्पन्दस्तद्व्यापारबलोपनता गुणाः, प्रतिभावत एव हि रसाभिव्यञ्जनसामर्थ्यं माधुर्यादिरूपनिबन्धनसामर्थ्यं न सामान्यकवेः । अनेन शब्देनेदं वस्तु वर्णयामीत्येवंभूतवर्णनापरपर्यायद्वितीयव्यापारसपाद्यास्त्वलङ्काराः ।

शब्दानमीभिः शब्दैरर्थानमीभिरर्थैः सघटयामीत्येवमात्मकस्तु वस्तुतीयः कवेः परिस्पन्दस्तदधीनात्मलाभादिशब्दात्मार्थात्मककाव्यशरीरसंश्रितानि वक्ष्यमाणश्लेषादिगुणदशकमनभिव्यञ्जनव्यापाराणि शब्दार्थोपसंस्काररूपाणि क्रियारूपाणि लक्षणानीति, तदुक्तं तत्रैव—

इति शब्दार्थयोर्येव संधिविदेहभूतयो ।
काव्ये तथा दर्शनानि लक्षणानि विदुर्बुधाः ॥ इति
काव्येऽप्यस्ति तथा कश्चित् स्निग्धः स्पर्शोऽर्थशब्दयोः ।
य श्लेषादिगुणव्यक्तिनदस्य स्याल्लक्षणस्थितिः ॥ इति,
चेष्टालङ्कारस्थानचिह्न ………॥ इति च

अत्र पक्षे कविव्यापारभेदाद् गुणालङ्कारलक्षणविभाग ।

अपरे मन्यन्ते—अभिनेयाना काव्यभावानां वक्ष्यमाणस्वरूप च रूपकमनभिदध्यात्, यथे स्वनामव्यापाराना तावदभ्यासो निर्माणविषयो लक्षण, वस्तुपात्मपूर्णरवादी, अनेन तु तथाभूतोऽभिनेयार्थं काव्यबन्धो लक्षणोन्नीत तेन च सोऽतीतरङ्गवर्णनयोगात्. तथा हि किञ्चित् प्रबन्धजातं गुणालङ्कारनिकरप्रधान, यथा मेघदूताख्य तद्विभूषणम्, एवमन्यदपि, इति ।

'प्रबन्धधर्मा लक्षणानि' इति केचित् ब्रुवते । कवेरभिप्रायविशेषो लक्षणमितीतरे पुनर्मन्यन्ते । केचिद् यथास्थानविशेष यद् गुणालङ्कारयोजन तल्लक्षणमिति । परे त्वभाषन्त—अलङ्कारादिनिरपेक्षेणैव निसर्गसुन्दरो योऽभिनेयविशेषः काव्येषु दृश्यते, समस्तलोकेष्वपि, तत्सौन्दर्यहेतुर्यो धर्मः. मूलक्षणः स एव चार्थः. काव्यशरीरविशेषरूपो लक्षणम् । उपमादीपकरूपकाणामानन्त्याद् भेदमाहुः । अन्ये तु शब्देन अर्थेन चित्रत्व लक्षणमिति ।

सारूप्यमिथ्याध्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथाश्च ।
आख्यानयाच्ञाप्रतिषेधपृच्छादृष्टान्तनिर्भासनसंशयाश्च ॥२॥
आशीः प्रियोक्तिः कपटः क्षमा च प्राप्तिश्च पश्चात्तपनं तथैव ।
अर्थानुवृत्तिर्ह्युपपत्तियुक्ती कार्योऽनुनीतिः परिदेवनं च ॥३॥
षट्त्रिंशदेतानि हि लक्षणानि प्रोक्तानि वै भूषणसम्मितानि ।
काव्येषु भावार्थगतानि तज्ज्ञैः सम्यक् प्रयोज्यानि यथारसं तु ॥४॥

---

भामहेनापि

"सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते" (२-८५) इत्यादि। तेन च परमार्थ व्यापार एव लक्षणं, न तु विषयद्वारेण विशेषलक्षणे तु निरूप्यत इति तत्त्वोक्तनरवा-हर्षोऽपि लक्षणं, व्यापारोऽपि च तद्विदां तु तदभ्यासपराणां च तथाभूतकाव्यात्मक-विषयावलोकने झटित्येव प्रतिभाति। तदन्यथानुमानेन प्रतिभया स्वसंवेदना इत्यनेन प्रयोजनम्। कुशलशिक्षितव्यापारो हि तदन्यव्यवहर्तॄणां भात्येव ॥१।२।३॥

षट्त्रिंशदिति च नान्यदिति धारणपरं कविहृदयनिभालनपराणामपरिमितत्वेन-त्वात्। किं तु बाहुल्येन तावदियता मध्यं व्याप्तम्, इयति च कविनाथयाथात्म्यमिति सख्यातिरूपणम्।

तथा च मतान्तरेण भरतमुनिरेवान्यथाप्युद्देशलक्षणेन नामान्तरैरपि च व्यवहारं करोति; तत एव पुस्तकेषु भेदो दृश्यते तं च दर्शयिष्यामः। पठितोद्देश-क्रमस्त्वस्मदुपाध्यायपरम्परागतः ॥१—४॥

तत्र विभूषणं लक्षयितुमाह अलङ्कारैरिति। भूषणे कटकादिभिः विभज्य स्थानदेशकालदशापुरुषादिविभाग विचार्य न्यस्तैरिव गुणालङ्कारैर्यदलङ्करणं तद् भूषणं नाम लक्षणं, कविव्यापारं, तद्द्वारेण शब्दार्थव्यापारावपि।

एतदुक्तं भवति—इह गुणा अलङ्काराश्च विषया इत्यनेन नियद्धाः काव्यार्थी-कृतानामभिधेयानां स्वभिषेकविषयं विभावादिभाव विपरीतं समर्थाः। तथा हि हास्यरसप्रधाने प्रहसनादौ सुभाषितेऽपि वक्तरि प्रयोक्तरि श्रोतरि वा गुणविनिवेशितं तु लक्षणं भजत्यलङ्कारश्च। तथा हि पादताडितके श्रोत्रियं श्रोतारमभिप्रेत्य विटस्यापि निर्गुणपुरुषस्यैवोक्तिः "मा मुसलेनापकार्षीः, मा कुसूलाग्निना धाक्षीः" इति शोभां पुष्णाति। अनौचित्यनिबन्धस्तु करुणविप्रलम्भादौ परमरस्य, यथा—

विना प्रियतमेनाद्य विरहानलतापिता।
दह्येत्यूनस्य विच्छेदे किंतु हाऽनलतापिता ॥

स्थाने निवेशस्तु यथा—

सानेव प्रतिबिम्बितेव लिखितेवान्तर्निखातेव च।
प्रोत्कीर्णेव च वज्रलेपघटितेव" इति। (मालतीमाधवात्)

यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥६॥
सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रसाध्यते[1] ।
यत्र श्लक्ष्णविचित्रार्था सा शोभेत्यभिधीयते ॥७॥

---

वलक्षापण च कृत, स यत्र प्रधानप्रकृतिर्भवतीत्युक्तम् । त्वचीति प्रहृतमारीचवृत्तान्त इत्युक्तम् । श्राणमित्यादिना नत्रैवास्य बहुमान इत्युक्तम् । राक्षसविषये दैववैगुण्यमित्युक्तम् । अत्र च यत्र यस्य यद्व्यापारस्तत्र प्राधान्यस्य का कथेति । प्रगुणितमिति बहुतररणसमर्दधुरन्धरतया कुटिलीकृतस्यापि शेषबहुमाने पुनर्योजनमित्युक्तम् । त्वदनुजवचन इति भेदोपायकृता नीतिसंपत् परपक्षे च विपर्ययम् । वत्तकर्णं इति सदाकर्णनमात्रमेतत्, न तु हृदये निर्व्याजं तेजोजाज्वल्यमानोऽपि भेद प्रति कोऽप्यस्य बहुमान । अयमिति गम्भीरधीराकृति प्रमथश्च आस्त इति । यद्यपि प्रकृते नापि कश्चिच्छोभोऽत्र एवोक्त मलीलमिति । अत्र चार्थस्यालङ्कारघटनाप्रयासमन्तरेणैव सुन्दरत्व लक्षणकृतमेव ।

ननु साभिप्रायमात्रत्व नामार्थस्य तु गुण ओज इत्युक्तम् । भो भो. सहृदया' अर्थो जडस्तस्याभिप्राय इति कथ भाषावक्तृधर्मो स इति चेत् तद्गुणोऽर्थस्य गुण इति कथम् ।

अथ वस्त्वन्तराक्षेपकत्वमेव तस्य स गुण इत्युच्यते तद्वस्त्वन्तरमाक्षिप्य वक्त्रभिप्रायरूपमेव; आक्षेपकत्वमपि कविमनीषाव्यापारबलादेव तथाविनिवेशनात् प्रकारान्तरयोगे तथाभावात् । अत एव प्रौढिर्यमुनो वक्तृधर्मत्व नत्वर्थे, कामसुपपर्यन्तामित्यलं बहुना ।

एतेषां च लक्षणानां सङ्कीर्णत्वेन लक्ष्ये दृश्यते बाहुल्यापेक्षया तूदाहरण मन्तव्यम् ॥६॥

अथ शोभा सिद्धैरर्थैरिति । यथा—

मेदश्छेदकृशोदर लघुभवत्युत्थानयोग्य वपु. ।
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्त भयक्रोधयो ॥
उत्कर्ष. स च धन्विना यदिषव. सिध्यन्ति लक्ष्ये चले ।
मिथ्या हि व्यसन वदन्ति मृगयामीदृग्विनोद. कुत. ॥

अत्र पादत्रयेण प्रसिद्धा एवार्था अभ्यसनीयत्वेन शोभमानास्तै' समविकल मृगयालक्षणमर्थं कृत्वा अप्रसिद्धोऽनुचितोऽपि सोऽयं उचितो विचित्रश्च निरूपित । न चायमलङ्कार. कश्चिदपि तु कविव्यापारेण य' शब्दार्थव्यापारादेवार्थघटनात्मा तत्कृत ह्येव लक्षणमेव । अशोभनोऽप्यर्थोऽमुना नयेन शोभेत इति शोभेत्युक्ता ॥७॥

---

1. KSS , NS. प्रयुज्यते ।

[1]धार्यमाणस्तु बहुभिर्वचनैः कार्ययुक्तिभिः ।
न च पर्यवतिष्ठेत सोऽभिमानस्तु संज्ञितः ॥८॥

---

अथाभिमान —धार्यमाणस्तु बहुभिरिति । यथा ममैव—

दीनाशोरमृतच्छटा यदि करा कस्मान्मनो मे भृशं
सन्दुष्यन्त्यथ कालकूटपटलीसंवलनमुषिता ।
किं प्राणान् न हरन्त्युत प्रियतमामन्मथसारं
श्रीकण्ठे शिशु वडिमोहविरहाम्लानापरान्ता स्थिति ॥

अत्र हि नाटकव्यंग्यार्थेन घटा इना यस्याः कार्ययुक्तिभिः पर्यालोचनाभिर्धार्यमाणो हृदये स्थाप्यमानो नावतिष्ठत इति । वार्यमाणोऽपि वा न नियन्त्रते । तथैवार्थं बद्ध । तथाभूतोऽर्थोऽत्रोऽभिव्यक्तानावानुगाय । भविष्यामनूहार्य उपमानोपमेयभावस्य कथंचिदप्यस्फीतारतरैतत्र यान्तुरभिमत वदता किमित्र यथाप्येव तदपि नैरस्त्यभिधानमभिधानावरलक्षणम् । एतदेव नाटकनाम्नाप्यन्यैर्वचनम् ।

दृष्टश्रुतानुभूतार्थकथनादिसमुद्भवम् ।
नाटकस्य क्षोभजननं नाटयमिति गतिनम् ॥इति॥

अमृतस्यैव हि चन्द्रस्य श्रुत नामस्तु सहोदरत्वं च, मन्त्राणां विषशमनं दृष्टं, स्वयमनुभूतं सौहार्दं च तत्समुद्भव, वृत्तान्तं यत्प्रकृते नाटकस्य तुल्यं तेन सोऽदृष्टश्रुतानुभूतस्य तत्क्षोभं हृदयप्रकम्पनं जनयति—ययमृतोद्भवस्य चन्द्रस्य नितिरेतमनु विदध्युरिति । एवमन्यत् ॥८॥

अथ गुणकीर्तनं—कीर्त्यमानैर्गुणैरित्यादि । यथा

पृथुरसि गुणैर्मूर्त्या रामो नलो भरतो भवान्
महति समरे शत्रुघ्नस्त्वं तथा वत्सर शिवो ।
इति गुणरिर्धृति विभ्रविरत्नभूपा
कस्मिन्नपि न मान्धाता देवस्थिताविवस्मायि ॥

अत्र हि विविधा वेद्या पृथुरामप्रभृतयस्मात्समुद्भवैर्गुणैः कीर्त्यमानैर्भूपा दोषा न परिहृत्यन्ते । तथा हि पृथुरगोरत्वो तथा दोषा अपि केचिद् वनात् भूमिदोहनप्रभृतय प्रतीयन्तु, नलोऽपीति चूतव्यसनितादि । एवमन्यत्र । अत एव न दोषोऽत्र प्रधानम् । गुणैरिति गुणवरिति निर्दिष्टं तु चाटुकारितः गुणकीर्तनं नाम लक्षणम् । यथापनुदाहिते स्थितं लक्षणानि यथाप्रकारानि विवचति । तदेव एव वक्ष्याम । अन्यत्र पाठ —

---

1. KSS., NS. vary absolutely.

कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः
दोषा न परिकथ्यन्ते तज्ज्ञेयं गुणकीर्तनम् ।
लोके गुणातिरिक्तानां बहूनां यत्र नामभिः
एकोऽभिशब्द्यते यस्तु विज्ञेयं गुणकीर्तनम् ॥९॥
उत्साहजननैः स्पर्धैर्यैरौपम्यसमर्थैः ।
प्रसिद्धैरपगूढश्च ज्ञेयं प्रोत्साहनं बुधैः ॥१०॥
यत्रैकस्यापि शब्दस्य दर्शनात्सुबहून्यपि ।
यान्ति सिद्धिमनुक्तानि तदुदाहरणं स्मृतम् ॥११॥

---

लोके गुणातिरिक्तानां बहूनां यत्र नामभिः ।
एको हि शब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् ॥इति।

अथ स्पष्टार्थं ॥९॥

अथ प्रोत्साहनं—उत्साहजननैरिति । औपम्यस्य समर्थकत्वेन यत्रेति अनेन परमाक्षेपेऽपि तस्य भाव इति दर्शितम् । यथा भट्टेन्दुराजस्य—

हरवृषभ ! तवैव नम्य माता जयति जगत्यसमानसूतिरेका ।
नियमति परमेश्वरोऽपि यस्मिन् महत्तमय स्वगण महावरोध ॥

अप्रस्तुतप्रशंसान्यत्र, तद्विभिन्न प्रोत्साहनस्य लक्षणत्वमेव, मैवम् तिष्ठ यथा लक्ष्मीरिति, स च भवान् मुरारिरित्यादि । इदमन्यत्र प्रियवचनमिति पठितम्—

यत्प्रसन्नेन मनसा पूज्यान्पूजयितुं वचः ।
हर्षप्रकाशनार्थं तु सा प्रीतिविनयाहृता ॥इति॥१०॥

अथोदाहरणं—यत्रैकस्यापीति । यथा—

कर्णान्तात् विमुक्तोद्धृतो गिरिरिव यस्य पृष्ठेदाशर्थ
त्रैलोक्य तपसा जितं यदि मते ! द्रोणा विमेनावना
सर्वं साध्वथवा रुणद्धि विरहक्षामस्य रामस्य चेत्
त्वद्दन्ताङ्कितवालिवक्षरुधिरक्लिन्नाग्रपुङ्खं शरम् ॥

अत्र उदाहृते हि रावणीयदशनपरिघट्टितवालिवक्षःपाटनेन श्लाघमानेऽपकृते सति तदपजय. तत्कक्षासम्यपरिग्रहस्यैव चतुरर्णवभ्रमणं पुनः कृपामात्रेण त्यागः तत्राप्रतीकारः. पुनरभिमानो दर्पं इत्यादि गम्यते । अक्षरसंहतेश्च विशेषः—तत्रावमोपादानव्यवच्छेदान्तरस्यान्ते अवच्छेदान्तरोपादानं यथा—हनूमत इति वक्तव्येऽक्षस्य हन्तुरिति, इह तु त्वद्दन्तेति तदीयविकारोदाहरणम् । अन्ये पठन्ति—

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् । इति

दर्शयन्तस्समयस्थावधिभिर्यदुक्तं तद्वाक्यमिति स एव फलितोऽर्थः ॥११॥

निरुक्त द्विविध प्रोक्त तथ्य चातथ्यमेव वा ।
सिद्धिप्रसाधित तथ्यमतथ्य चाप्रसाधितम् ॥१२॥

---

अथ निरुक्त—निरुक्त द्विविधमिति । सिद्धिर्लक्षणेन स्वीकार । तथा प्रसाधित तथ्य, ततोऽन्यदतथ्यम् । उदाहरण यथा ममैव—

वीरोत्सवे सङ्गरसीम्नि मूढ य प्रापयत् मत्पथ कथञ्चित् ।
स चार्जुन सोऽपि च नाम कृष्ण प्रसिद्धिरित्थ वितथैव सर्वा ॥

परस्पर नाम्नोरन्यत्र तथ्यत्व स्वविषये त्वतथ्यतेति । न चायमर्थश्लेष, स हि तुल्यसत्ययो । यथा "गावो व पावनाना" इति गोशब्दस्य रश्मिषु सुरभिषु चानादित्वेन प्रसिद्धे । इह त्वेकत्रान्यत्वे कृत समय इति । एव पृथक् तथ्यातथ्य-योरुदाहार्यम् । अन्यत्र पाठ —

निरवद्यस्य वाक्यस्य पूर्वोक्तार्थप्रसिद्धये ।
यदुच्यते तु वचन निरुक्त तदुदाहृतम् ॥

पूर्वं यत्प्रोक्तो वाक्यस्य सवन्धी कश्चिदर्थस्तस्य प्रसिद्धयेऽनवद्यभावस्य वाचक यदुच्यते तेन निरुक्तमितोऽन्यथा निरर्थकमेवात्र वाच्य स्यात् । यथा सत्य स राजा मतिषु रञ्जनादिति ॥१२॥

अथ गुणानुवाद—गुणानुवाद इति परिमितस्याप्यादिनोत्कृष्टगुणनयोपमा, तत्कृतो गुणानामुत्सेक. । यथा—

पालिता शौरिकेन्द्रेण त्वया राजन्वसुन्धरा ।

ननूपमेयमलङ्कार, विमत, उक्त ह्यलङ्काराणा वैचित्र्य लक्षणकृतमेव । एव एव शिक्षितैरपि दण्डिप्रभृतिभिर्ये निरूपिता उपमाभेदा, तत्र यो भेदस्तोऽद्य आचिख्यासा-सम्यनिर्णयादिरर्थ, स ताहक् पृथगलङ्कारतया गणित: । गणनेऽपि वा समृष्टिसङ्करा-पत्ति । अर्थमात्र तदिति चेत् तर्हि तदेव लक्षणम् । यथा हि राजता विभज्य विचार्य-माणा इत्यमवतिष्ठते—मकुटाद्यलङ्कार, शौर्यादिगुणो, भूद्धोरस्त्वादिलक्षणसमुदायो राजालङ्कार्यश्च गुणवाश्च लक्षणीयश्च, तथा काव्यमपि । तेन गुणालङ्कारव्यतिरिक्ता सर्वे लक्षणमिति मन्तव्यम् । "अस्त्युत्तरस्या" इति हि पूर्वार्धे आख्यान नाम लक्षणम् । नन्वेव सर्वत्र लक्षणयोग, क आक्षेपार्थ, प्रियमेवास्माकमद सत्सर्वमलङ्कारयुक्त काव्यम् । ननु गौर्वाहीक इति रूपकयोगेऽपि, कि न काव्य, दोषपरिवर्जन गुणवत्त्व-रसवत्त्वादि वैकल्यादिति चेत् आसमास्वापादितो दोषस्त्वयैवोन्मूलित इत्यास्ताम् ।

अन्यत्र तु पाठ —

गुणाभिधानैर्विविधैर्विपर्यासयोजितै ।
गुणातिपातो मधुरैर्निष्ठुरैर्वा भवेदिह ॥

गुणानुवादी हीनानामुत्तमैरुपमाकृत: ।
उत्तमार्थविशेषो य स चाप्यतिशय स्मृत: ॥१३॥

बहूना भाष्यमाणानामेकस्यार्थविनिर्णयात् ।
सिद्धोपमानवचन हेतुरित्यभिसंज्ञित ॥१४॥

---

मधुरैर्गीतं (गुणं) निष्ठुरैर्वा विविधैरुपमानभूतैरर्थैर्ये प्रयोजिता गुणास्तदभिधानैरुपलक्षितो गुणातिपात इत्यर्थ ॥१२॥

गुणानुवाद स ज्ञेयो यत्राभेदोपचारत.
गौणी वृत्तिमुपाश्रित्य वस्तुनो रूपमुच्यते ।

अथातिशयः—उत्तमार्थाद्विशिष्ट इति उक्तादप्यर्थाद्विशेषो । यथा भट्टेन्दुराजस्य ।

यावन्त्येव पदान्यलीकपिशुनैरालीजनै शिक्षिता
तावन्त्येव कृतागसो द्रुततर व्याहृत्य पत्यु. पुर ।
प्रारब्ध परतो यथा मनसिजस्येच्छा तथा वर्तितु
प्रेम्णो मौग्ध्यविभूषितस्य सहज कोऽप्येष शान्त क्रम ॥

अत्रेर्ष्यात्मा य प्रेमण्युत्तमेऽर्थस्ततोऽपि विशेष उक्त, प्रतिपद चाभिप्रायोऽस्ति स विवेचनीय । न चेयमतिशयोक्ति समाख्यमात्रत्वात् । सोऽपि वा लक्षणमलङ्कार इति वक्ष्यामः समनन्तरमेव । अन्यत्र तु पठ्यते—

बहून् गुणान् कीर्तयित्वा सामान्यजनसभवान् ।
विशेष कीर्त्यते यत्र ज्ञेय सोऽतिशयो बुधै ॥इति॥१३॥

अथ सहेतु—बहूना भाषणानामिति । बहून् भाषमाणानन्तरादेवैकस्यासाधारणस्यार्थस्य निर्णय कर्तव्यत्वेनावलम्ब्य सिद्धस्य प्रमितस्योपमानवचन प्रक्षेपवचन मम तावदेव प्रतिभासते इति सहेतु । यथा भट्टेन्दुराजस्य—

एके वारिनिधिप्रवेशमपरे लोकान्तरालोकन
केचित्पावकयोगिन निजगदु: क्षीणेऽह्नि चन्द्रार्चिषाम् ।
मिथ्या चैतदसाक्षिक प्रियसखि ! प्रत्यक्षतीव्रातपो
मन्येऽह पुनरध्वनीनरमणीचेतोऽधिशेते रवि ॥

एकस्येति । एकमसाधारणम् । सिद्धोपमानेति । डुमिञ् प्रक्षेपणे इत्यस्योपमानम् । अन्यत्र पाठ —

यत्प्रयोजनसामर्थ्याद्वाक्य मिष्टार्थसाधनम् ।
समासोक्त मनोग्राहि स हेतुरिति सज्ञित. ॥इति।

सम्यगस्यते हृदि क्षिप्यते येन स समास उपपत्तिस्तयोक्तम् ॥१४॥

अपदेशस्तु परोक्षो यस्मादुत्पद्यतेऽनुकरणेन ।
लक्षणसमानकरणात् सारूप्य तत्तु निर्देश्यम् ॥१५॥
अभूतपूर्वैर्यैरर्थैस्तुल्यस्यार्थस्य निर्णय ।
स मिथ्याध्यवसायस्तु प्रोच्यते काव्यलक्षणे ॥१६॥

---

अथ साख्प्य—अपदेशस्तु परोक्षो यस्मादुत्पद्यतेऽनुकरणेनेति । यथा ममैव—

सैन्दूरीकृतसान्द्रकुङ्कुमरसप्रच्छायमालोच्यते
यत्प्राच्या दिशि वक्रिमास्पदमिद इन्दुन्दलेख मह ।
तत्तेजो जरठांशुना कलयता भाविप्रवासावधि
सन्ध्यामुग्धवधूकपोलफलके कीर्णो नखाग्राङ्कुर ॥

अत्र यदिति निर्देश्य परोक्षवस्तु तत्त्वस्यापरिज्ञानात् । अनुकरणेन प्रच्छाय—मात्रेण अपदेश्यमालोच्यमिति लक्षणेन सैन्दूरीकृतेत्यादिना समान सप्रमाणक करण दर्शनक्रिया यस्य तादृशे वस्तुनि साख्प्य लक्षणम् । पौर्णमास्यामपि वक्ररेखेवेन्दो-र्भागो लक्ष्यते उदयाचलान्तरितत्वात् सन्ध्यासमये । न चेयमुपमा उपमेयस्याभावा दुपमेयमेव हि पूर्वार्धेन लिख्यते । पुस्तकान्तरेषु तु पाठ —

यथादेश यथाकाल यथारूप च वर्ण्यते ।
यत्प्रत्यक्ष परोक्ष वा दृष्ट तद्वर्णतोऽपि च ॥इति

प्रत्यक्ष वस्तु परोक्षमिव देशकालरूपानुसारेण वर्ण्यते ॥१५॥

अथ मिथ्याध्यवसाय —अभूतपूर्वैर्यैरर्थैरिति । अपारमार्थिकैरेवार्थैस्ततुल्य-स्यावस्तुभूतस्यार्थान्तरस्य यस्य वक्तृव्यापारे सति निश्चय सोऽयम् । यथा ममैव—
यो दुर्जनाद्वाञ्छितसिद्धिमीहते स नूनमुत्रामनि त सुखैषिनम् ।

जुहृज्ज्वलाग्नौ विगतार्यमण्डल प्रसह्य षष्ठ विषय प्रसाधयेत् ।

*काव्यलक्षणमित्यनेन काव्येषु लोकविपर्यासबाहुल्यमवश्य भवतीति दर्शयति ।*
अन्ये तु पठन्ति—

विचारस्यान्यथाभावस्तथा दृष्टापदृष्टयो ।
सन्देहात्कल्प्यते यत्र सविक्षेपो विपर्यय ॥

विचार्यत इति विचारोऽर्थ अदृष्टमित्यर्थ । सदेहोऽत्र भ्रम, अन्यथाभावो *विपर्यय । अथवा सशयोऽपि हि वस्तुनो विषयतत्त्वमन्यथाकार दर्शयन् विपर्यय* एव ॥१६॥

अथ सिद्धि—बहूना च प्रधानानामिति । प्रसिद्धाना मध्ये एकमित्यप्रसिद्ध यन्नाम कीर्त्यते तस्यासाधारणधत्वस्य प्रयोजनस्य सगतये करण तत्र निवेशन यस्य तादृक् तत्कीर्तन सिद्धिहेतुत्वात्सिद्धि । यथा—

बहूनां तु प्रधानानां मध्ये यन्नाम कीर्त्यते ।
एकार्थसाधनकृतं सा सिद्धिरिति कीर्त्यते ॥१७॥

गुणैर्बहुभिरेकार्थैः पदैर्यं सम्प्रशस्यते ।
पदोच्चयः तु तं विद्यान्नानार्थग्रथनात्मकम् ॥१८॥

---

भद्रेश्वरः सुरसरित्स भवानहं च
त्रैलोक्यसारमिह सम्प्रति जीवलोके ।
भद्रेश्वरः सुरवरेषु सरित्सु गङ्गा
त्वं पार्थिवेष्वहमतीव सुदुःखितेषु ॥

अत्र भवानहं चेत्यप्रसिद्ध प्रसिद्धमध्ये उपात्तमसाधारण्यसिद्धि विधत्ते ॥१७॥

अथ पदोच्चयः—गुणैर्बहुभिरेकार्थैरिति । एकता एकतात्पर्यनिष्ठैर्बहुभिः शब्दैर्यं वाच्यत्वेन स्वीकृत्य धर्मास्तिवुपलक्षितत्वेनैव यद्वस्तु प्रशसनम् । कथं, नानार्थग्रथितात्मकमुपलम्भिनरूपं कृत्वा तत्पदानामुच्चयः उत्कर्षेण चयः बाहुल्यं यत्रेति पदोच्चयः ।

अक्षार सार परिमुषितरत्नं त्रिभुवन
निरालोकं लोकं जननयननिर्माणफलम् ।
अदर्पं कन्दर्पं मरणशरण बान्धवजन
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसित ॥

अत्र ह्यवान्तरावगमकारिणामवान्तरवाक्यरूपाणां पदानां तात्पर्यमभिन्नं स्वार्थस्तु भिन्नः । पदोच्चये पदशब्दार्थस्तु पादो भाग इति । अन्ये पठन्ति—

पूर्वेन एवार्थः ॥१८॥

अथाक्रन्दना—आत्मभावमुपन्यस्येति । नीवः साक्षादवाच्यो योऽर्थस्तस्य परं प्रति सादृश्ययोजनप्रकारैरात्माभिप्रायं प्रमुखे दत्त्वा तत्समस्ततः भापणं स्फुटकथनं तन्निजभावाविष्करणप्रधानत्वादाक्रन्दो नाम लक्षणम् । यथा ममैव—

किं पान्थ ! त्वरसे विलोकय निशा या ह्युन्मुखी पाण्डुरा
चन्द्रं चुम्बितुमीहसे प्रकटयन्त्यग्रे मरालाः स्थितिम् ।
यद्वा नागरभोगदुर्ललितकैर्यस्तापि न ज्ञायते
ग्रामेऽग्राम्यजनोपभोगसुभगं निर्व्याजरम्यं सुखम् ।

अत्रोत्तरेणार्धेन ग्रामीणो रम्यतमो भोजनशयनादिभोग इति कथ्या मोहप्रायोऽवाच्य आत्माभिप्रायः । तदरोचकरोचकत्वमुभय प्रमुखे निधाय निशाकरवृत्तान्तसादृश्येन तीव्रः स्वात्मानुराग आविष्कृतः । अन्ये पठन्ति—

रूपकैरुपमाभिर्वा तुल्यार्थैः सुप्रयोजितैः ।
अप्रत्यक्षार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः ॥

आत्मभावमुपन्यस्य परसादृश्ययुक्तिभिः।
तीव्रार्थभावणं यत् स्यादाक्रन्दः स तु कीर्तितः ॥१९॥

हृदयस्थस्य भावस्य सुस्पष्टार्थप्रदर्शनम्।
अन्यापदेशकथनैर्मनोरथ इति स्मृतः ॥२०॥

[1]अपृष्टैरथवा पृष्टैर्निर्णयः क्रियते तु यः।
आख्यानमिति तज्ज्ञेयं लक्षणं नाटकाश्रयम् ॥२१॥

---

प्रथमार्धेन परसादृश्यमुक्तम्। अप्रत्यक्षस्यात्मभावस्य सस्पर्शना ज्ञाप-नेत्यर्थः ॥१९॥

अथ मनोरथः—हृदयस्थस्य भावस्येति। यथा—

णिग्गंधदुरारोहिं पुत्तअ (मा) पाडलिं समारुह।
आरूढणिपडिआ के इमिए ण कआ इह ग्गामो।
(निर्गन्धदुरारोहां पुत्रक! पाटलीं मा समारोह।
आरूढनिपतिता केऽनया न कृता इह ग्रामे॥ इति छाया)

अत्र पादपमारोहन्नेव कश्चिद् दुराशयपुंश्चलीसंगमोत्सुकः वृद्धविदग्धया स्वाभि-प्रायद्योतनेन प्रबोध्यते, तत्प्रस्तुतमेवान्यदर्पादिवय। अत एवाप्रस्तुतप्रशंसा, सापि चार्थे-षान्तर्भूता। नन्वलंकारे ह्यलंकार्यत्व ह्यमन् इति केयं युक्तिः, लक्षणं तु भवति लक्षणत्वादेव ॥२०॥

अथाख्यानं पृष्टैरपृष्टैरपि चेत्यादि। 'प्रश्नपूर्वका यत्र बहवो निर्णीयन्ते यथा—बाले! नाथ! विमुञ्च मानिनि! इत्यादावुक्तिप्रत्युक्तौ, प्रश्नसदृशैर्वा वाक्या-वाक्यवस्त्वभिधानैर्यत्र निर्णयः। यथा—

रामोऽसौ भुवनेषु विक्रमगुणैर्यातः प्रसिद्धिं पराम्।
इत्युक्ते यदि प्रसिद्धः क्व मया न ज्ञायत इत्याशङ्क्याह्यात—
अस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्।
किं तस्य प्रसिद्धौ निदानमित्याशङ्क्य पुनराख्यात—
वन्दीवैष यशांसि इत्यादिना

नाटकाश्रयमित्यनेन भूयो लक्ष्यमाणस्येत्याह। अन्ये पठन्ति—

वाक्यैः सातिशयैर्युक्ता वाक्यार्थस्य प्रसाधकैः।
लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता॥ स्पष्टम् ॥२१॥

---

१. GOS. पृष्टैरपृष्टैरथवा।

आदौ यत् क्रोधजननमन्ते हर्षप्रवर्धनम् ।
[1]यत्तु प्रियं पुनर्वाक्यं सा याच्ञा परिकीर्तिता ॥२२॥

कार्येषु विपरीतेषु यदि किञ्चित् प्रवर्तते ।
निवार्यते च कार्यज्ञैः प्रतिषेधः प्रकीर्तितः ॥२३॥

---

अथ याच्ञा आदौ यत्क्रोधजननमिति । प्रथमार्धेन हितं व्याख्यातम् । तेन प्रथम यत्तदात्वे परुषमायत्या च सत्फलं वस्तूच्यते, तदत्र प्रियम् । पुनः शब्दात्ततो हितं पुनः प्रियमित्येव प्रबोध्यस्य प्रबोधनधिया याचना याच्ञा । यथा ममैव—

भूमिः कण्टकिनी, पुरो विटपिनः प्रायो बहूपद्रवाः ।
भूयश्चैव दिवाकरो मृगयते सन्ध्याङ्गनासङ्गमम् ।
तद्विश्रम्य जनोऽयमत्र सदने ग्राम्योचिता सेवता ।
प्रातः पान्थ ! विचार्य चेतसि चिरं स्थास्यसि गम्यसि वा

पाठान्तरं तु—

हितैः प्रसन्नवचनैर्यत्परस्यानुवर्तनम् ।
क्रियते वाक्यचेष्टाभिस्तद्दाक्षिण्यमुदाहृतम् ॥ इति ॥२२॥

अथ प्रतिषेधः—कार्येषु विपरीतेष्विति । यथा अमरुकस्य ।

लग्ना नांशुकपल्लवे, भुजलता न द्वारदेशेऽर्पिता ।
नो वा पादयुगे तया निपतितं तिष्ठेति नोक्तं वचः ।
काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तः शठः ।
तन्व्या बाष्पजलौघकल्पितनदीपूरेण रुद्धः प्रियः ।

अत्र तृतीयपादेन विपरीतकार्यप्रवृत्तिरुक्ता । आद्यार्धेन कार्यज्ञत्वं नायिकायाः तथापि निवारणं तुर्यपादेनोक्तम् । अन्ये त्वधीयते—

यद्वाक्यं वाक्यकुशलैरुपायेनाभिधीयते ।
सदृशार्थाभिनिष्पत्त्याः स लेश इति कीर्तितः ॥ इति ॥

वाक्यमिति वाक्यार्थो विधिर्वा निषेधो वा । नदीपूरश्च वर्षासु रोधको दृष्ट इति सदृशार्थाभिधानेनोपायेन निषेधः कृतः ॥२३॥

अथ पृच्छा यत्राकारोद्भवैर्वाक्यैरिति । यथा—

किं श्रीमाद् गुरुदक्षिणा गुरुमदाद्रोमप्रियं प्राप्तवान् । इत्यादि

अत्राकारेणाभिप्रायसूचनेन वाक्यादिनोद्भूतानि द्योतितप्रश्नकानि वाक्यानीति

---

1. GOS. यत्र ।

यात्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ।
पृच्छन्निवाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥२४॥

विद्वान् पूर्वोपलब्धौ यत्समत्वमुपपादयेत् ।
निदर्शनकृतस्तज्ज्ञै स दृष्टान्त इति स्मृत ॥२५॥

अनेकयुक्तिमद्वाक्यमनेकार्थप्रसाधकम् ।
अनेकवाक्यसंयुक्त तन्निर्भासनमुच्यते ॥२६॥

अपरिज्ञाततत्त्वार्थं यत्र वाक्य समाप्यते ।
सोऽनेकत्वाद्विचाराणा सशय परिकीर्तित ॥२७॥

---

भाव । यत्र भावरसोपेतैरित्यन्ये प्राच्य पादमधीयते ॥२४॥

अथ दृष्टान्त —विद्वान्पूर्वोपलब्धौ यत्समत्वमिति । यथा ममैव—

हा हालाहललेहने हतमति मोय समुत्कण्ठितो
गाढाङ्गारगरिम्णि चैष जडधीर्देह निविक्षेप्स्यति ।
ग्राम्योऽप्याजगरी गुरु गलगुहा मोहादय धावति
व्याघूयेतरसङ्गतानि मदय सार्धं खलै खेलति ॥

मदयमित्यादि यस्य हेतो । हालाहललाक्षाकूटज्वलनादिना येन साम्य कृत स दृष्टान्त । न चेयमुपमा, यतो निदर्शनेन प्रत्यक्षीकरणाय साम्य कृत, इतोऽप्येव कर्तुमुद्यत इति, न च रूपक यदेतत्करोति तत इदमस्य भविष्यतीति भिन्नकालत्वात्, तदाह पूर्वोपलब्धौ सत्यामिति ॥२५॥

अथ भासन अनेकयुक्तिमद्वाक्यमिति । यथा "कर्ता द्यूतच्छलाना जतुमय शरणोद्दीपन सोऽभिमानी" (वेणी)—इत्यादि । भास्यते प्रकृत रोषादियेन । पाठान्तर—

ईप्सितार्थप्रसिद्ध्यर्थं कीर्त्यन्ते यत्र सूरिभि ।
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ॥ इति ॥२६॥

अथ सशय —अपरिज्ञाततत्त्वार्थमित्यादि । यथा—

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मन ।
ता हर्तुं विबुधद्विषोऽपि न च मे शक्त पुरोवर्तिनी
सा चात्यन्तमगोचर नयनयोर्यातेति कोऽय विधि (विक्रमो ४-२)

अत्राद्यो भाग सशयोदाहरण अनन्तरस्तूपपत्त्युदाहरणम् ॥२७॥

अथार्थापत्ती —यथाशास्त्रार्थसपन्नामित्यादि । यथा—

यत्र शास्त्रार्थसम्पन्नो मनोरथसमुद्भवाम् ।
अप्रार्थनीयामन्यां वा विदुस्तामाशिषं बुधाः ॥२८॥
यावो यत् क्रोधजननमन्ते हर्षप्रवर्धनम् ।
तत् प्रियं वचनं श्रेयमाशीर्वादसमन्वितम् ॥२९॥

---

'पादाग्रस्थितया' (रत्ना-१-१) इत्यादि । सर्वं वचनं न चाशीः, अलङ्कार ? लक्षणं स्तुत्या एव वर्णनीयत्वात् ॥२८॥

अथ प्रियं—यावो यत्क्रोधजननमिति । यथा—

किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या
उन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥

अत्र भ्रमति वल्लभेत्यादौ क्रोधजननं हन्त कीर्तिरिति हर्षकृत् । अन्ये पठन्ति—

वाच्यमर्थं परित्यज्य दृष्टपादिभिरन्यथा ।
अन्यस्मिन्नेव पतनादाशु भ्रंशः स उच्यते ॥ इति ॥

दृष्टिदर्शनं, प्रकृतिमुखरादिवाक्यमिति पूर्वोक्तमित्यर्थः । न चेयं व्याजस्तुतिः, निन्दाभागे स्तुतेरभावात् । पूर्णायास्तु निन्दाया अभावात् । यथा वा—

"प्रद्योतस्य सुता" इत्युक्त्वा वसन्तकं विप्रतारयितुं राजा वसन्तशब्दमाचष्टे । मयोरच समयः इत्याकर्णने प्रसूनमयस्य इत्यनादृत्य निवृत्त्यङ्कुरेण हृष्यति विदूषके, समय इतिशब्देनान्यत्र पतनात्प्रथमक्रोधस्य चेति प्रियवचनम् । प्रियङ्कर इति लोके एतत्सिद्धम् ॥२९॥

अथ कपट—छलमुक्तमेति । व्याजप्रयोगेण अभिसन्धानं वञ्चना । अभिभावकं तिरस्कारकं । छलोक्त्या कथितस्यार्थस्यान्यथाग्रहणं अपलापो वा कपटं, तस्य सङ्घातो लक्षणम् । कपटो वस्तुकमाहुर्वाच्छ्नोर्वा समुद्भूतः । वस्तुकमोद्भूतस्य मालतीमाधवे मकरन्दस्य मालतीवेषधारणं, दैविकस्य नागानन्दे जीमूतवाहनस्य शङ्खचूडच्छलनं, मनुष्यस्य तु छलितरामे लवणासुरप्रयुक्तयो राक्षसयोर्मन्थराकैकेय्योर्वेषधारणं, सीताया वनवर्त्मन्या निर्वासनं च कृतम् । यथा वा कृत्यारावणे प्रथमेऽङ्के सीतावेषधारिण्या शूर्पणखया लक्ष्मणो वञ्चितोऽभिमुखश्च "ता सव्वहा अण्ण एव्व दे अणिद्धं अभिप्पायं लक्खेमि" इत्यादिना वचनेन । अन्ये पठन्ति—

यत्र सङ्कीर्तयन्दोषं गुणमर्थेन योजयेत् ।
गुणातिपाताद्दोषं वा गर्हणं नाम तद्भवेत् ॥ इति ॥

छलयुक्त्या त्वन्येषामभिसन्धानाभिभावकं कपटम् ।
द्वित्रिप्रयोगयुक्तो विज्ञेय कपटसद्भाव ॥३०॥

दुर्जनोदाहृतं रूक्षं सभामध्येऽतिवादित ।
अक्रोध क्रोधजननैर्वाक्यैर्य सा क्षमा भवेत् ॥३१॥

दृष्ट्वैवावयव कञ्चिद्भावो यत्रानुमीयते ।
प्राप्तिं तामभिजानीयाल्लक्षण नाटकाश्रयम् ॥३२॥

---

तस्त्रिविधमपि वागुपचारसामान्याच्छलमत्र स्वीकृतम् ॥३०॥

अथ क्षमा—दुर्जनोदाहृतैरिति । दुर्जनोक्तैर्वचनै क्रोधजननै सभाया ताडितोऽपि य पुरुषोऽक्रोधन क्रोधहीन स एव क्षमावान् । तद्वर्णनोचित कविव्यापार. क्षमेत्यर्थ । अनेन च यथोचिताभिन्नवृत्तिप्रचय सर्वो विभावाद्युचितो निर्वर्त्यमानः काव्यलक्षणत्वेन सूचितः । क्षमा यथा ममैव—

क्रोधाय दुष्टवचन प्रति किं न कोप
क्षोभ करोति हृदये ननु कोप एव ।
मित्र ममैव तु निजात्मनि योऽपकार
कृत्वा ममाशुभकलङ्कविधानहेतु ।

अन्येषां पाठ —

सिद्धान् बहून् प्रधानार्थांस्त्यक्त्वा यत्र प्रयुज्यते ।
विशेषयुक्त वचन विज्ञेय तद्विशेषणम् ॥

सिद्धानिति लोकप्रसिद्धान्प्रधानभूतानर्थानपर्यायांस्त्यक्त्वानादृत्य क्रोधाद्यद्वचन विशेषेण युक्त, यथा 'मनाय' परिवाद, सुहृत्प्रत्यय इति स्वात्मनि क्षोभः पुण्यादिकमुररीकृत्यापि ममाशुभ्यमचय दुःखोनभोगदानेन शमयति ॥इति॥३१॥

अथ प्राप्ति—दृष्ट्वैवावयव कञ्चिदिति । यथा

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥

अत्र पदपङ्क्तिकृतलक्षणमंशं दृष्ट्वा तन्मयात्र भवितव्यमिति शकुन्तलायाः सद्भावोऽनुमीयत इति ॥३२॥

अथ पश्चात्ताप—अकार्यं सहसा कृत्वेति । सहसेत्यविचार्य अकार्यं कृत्वा यथा—अङ्गुलिमुद्रामिव इदोषत उत्पन्ना । जम्बुकवत्सो भूतभूहि मुव ब्लोहि पो । कार्यमकृत्वा यथा—

मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु इति । शाकुन्तले ।

अन्ये पठन्ति—

अकार्यं सहसा कृत्वाऽकृत्वा कार्यमथापि वा ।
सन्तापो मनसो यस्तु पश्चात्ताप प्रकीर्तित ॥३३॥
प्रश्रयेणार्थसंयुक्त यत्परस्यानुवर्तनम् ।
स्नेहाद्दाक्षिण्ययोगाद्वा सानुवृत्तिस्तु संज्ञिता ॥३४॥

---

अनेकार्थविचारस्तु विचार. परिकीर्तितः ।इति। अनेकस्य कार्यरूपस्यार्थस्य कृताकृतस्य विचार किमेतत्कृतमिति ॥३३॥

अथानुवृत्ति —प्रश्रयेणार्थमयुक्तमिति । यथा भट्टेन्दुराजस्य—

राज्ञा यद्यनुरध्यसे यदि भवेद्वाच्य पुरा मादृशा
हस्तस्पन्दमगोप ! किंचन मनाक् पृच्छत्ययीरो जन ।
अग्रे रोहणचारिणा मरमस सद्वर्धमाणश्चिर
क प्रत्याययितु प्रयामरसिको यत्नेन रत्नायसे ॥

अप्रस्तुतप्रशमात्वेऽपि हि यदप्रस्तुतस्य शरीरवैचित्र्य तल्लक्षणकृतमेव, लक्षणं हि शरीरमित्युक्तम् । कटकादिरपि हि यद्वैचित्र्य कुशलसुवर्णकारोत्प्रेक्षित तल्लक्षणमहिम्नैव । तत्तेनोपमानशरीरस्योपमेयशरीरस्य वा वैचित्र्यं लक्षणानामेव व्यापार' इत्येवमुपमारूपकदीपकानां त्रयाणामलङ्कारत्वेन वक्ष्यमाणानां प्रत्येक षट्त्रिंशल्लक्षणयोगात् लक्षणानामपि चैकद्वित्र्याद्यवान्तरविभागभेदादानन्त्य केन गणयितु शक्यम् इदानीं शतसहस्राणि वैचित्र्याणि सहृदयैरुत्प्रेक्ष्यताम् । परे त्वधीयते—

उभयो प्रीतिजननी विरुद्धाभिनिवेशयो ।
अर्थ प्रसादजननी ज्ञेयस्त्वनुनयो बुधैः ॥ इति ॥

उभयोरत्र वक्तृवाच्ययोरन्योन्यश्च विरुद्धाभिनिवेश. । एकस्य तत्त्वविश्रान्तता अपरस्य लिप्सा तत्तद्वदाचरितमिति ॥३४॥

अथोपपत्ति —प्राप्तानां यत्र दोषाणामिति । प्राप्तानामिति वीप्सागर्भो निर्देश दोषाणामित्युपपत्त्ययोगदृष्टत्वेनावस्तुभूतानामित्यर्थः । यथा—
"निष्ठेरत्नोपवरा" दित्यादि । यथा वा—

क्वाकार्यं शशलक्ष्मण. क्व च कुल भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषा कृतधिय' स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं धास्यति ।इति। (विक्रमो)

अन्ये त्वधीयते—

परिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते ।
विद्वन्मनोहरं स्वल्पमुपदिष्टं तदुच्यते । इति ।

